# अस्मदीयं कथनम्

विद्यालयस्तरीयशिक्षामुद्देश्यप्रधानां व्यावहारिकीं सामयिकीं वृत्तिदायिनीं च विधातुं समये समये पाठ्यक्रम-पाठ्यपुस्तकविकास-परिमार्जनानुकूलनकार्याणि निरन्तरं सञ्चाल्यमानानि सन्ति । विद्यार्थिषु राष्ट्रराष्ट्रियते प्रति सम्मानभावनामुद्भाव्य नैतिकानुशासन-स्वावलम्बनादि-सामाजिक-चारित्रिक-गुणानामाधारभूत-भाषिकशिल्पस्य विकासपूर्वकं सहयोगात्मकस्य दायित्वपूर्णस्य चाऽऽचरणस्य विकासोऽप्यत्वे आवश्यको दृश्यते । अस्या एवावश्यकतायाः परिपूर्तये शिक्षासम्बद्धैर्महानुभावैः सम्मिलितानां गोष्ठीनामन्तःक्रियायाश्च निष्कर्षेण निर्मितं २०७८ तमस्य वैक्रमाब्दस्य पाठ्यक्रममनुसृत्य पुस्तकमिदं निर्मितं वर्तते । शिक्षा विद्यार्थिषु वर्तमानस्य ज्ञानपक्षस्यान्वेषणं विधाय शिक्षणशिल्पेन जीवनस्य सम्बन्धं स्थापयति । शिक्षया विद्यार्थिषु स्वाधिकारस्य, स्वतन्त्रतायाः, समानतायाश्च प्रवर्धनाय, स्वस्थजीवनस्याभ्यासाय, तार्किकविश्लेषणेन निर्णयाय, वैज्ञानिकविश्लेषणेन व्यक्ति-समाज-राष्ट्राणां सबलविकासाय चाग्रेसरणशीलं सामर्थ्यं विकसनीयम् । एवं व्यक्तेः नैतिकाचरणप्रदर्शनाय, सामाजिकसद्भावप्रवर्धनाय, पर्यावरणस्य समुचितप्रयोगशिक्षणाय, दृढशान्तौ प्रतिबद्धतायै च शिक्षायाः आवश्यकता समाजे अवलोक्यते । तेन समाजसापेक्षतया ज्ञान-शिल्प-सूचना-सञ्चार-प्रविधीनां प्रयोगसमर्थाः, स्वावलम्बिनः, व्यावसायिकशिल्पाभ्यासनिरताः, राष्ट्रं राष्ट्रियतां राष्ट्रियादर्शं च प्रति सम्मानविधायकाः, समाज-स्वीकार्याः, सदाचरणशीलाः, स्वसंस्कृति-संस्कारपालनपराः, परसंस्कृत्यादिषु सहिष्णवश्च नागरिकाः शिक्षया निर्मातव्याः । एवं कल्पनाशीलानां रचनाशिल्पिनाम्, नैरन्तरिकपरिश्रमेणोद्यमशीलानाम्, विचारे उदात्तानाम्, व्यवहारे आदर्शमयानाम्, सामयिकसमस्यानां व्यवस्थापने साफल्याधायकानाम्, स्वावलम्बिनाम्, देशभक्तानाम्, परिवर्तनोद्यतानाम्, चिन्तनशीलानाम्, समावेशिसमाजनिर्माणे योगदानं करिष्यमाणानां च नागरिकाणां निर्माणं शिक्षया विधातव्यमिति समाजस्यापेक्षा दृश्यते । इमानेव पक्षान् विचार्य 'राष्ट्रिय-पाठ्यक्रम-प्रारूप, २०७६' इत्यनुसारेण निर्मितस्य कर्मकाण्डविषयकपाठ्यक्रमस्याधारेण सप्तम्याः कक्षायाः पाठ्यपुस्तकमिदं विकसितं वर्तते ।

सर्वप्रथमं डा. ऋषिराम-पोखरेलः, केशवः अधिकारी, शम्भुप्रसाद-दाहालः, हरि-गौतमप्रभृतीनां महानुभावानां कार्यदलेन लिखितमिदं पुस्तकं डा. रुद्रप्रसादः मिश्र, शिवप्रसादः घिमिरे, अशोकः पौडेल, पुरुषोत्तमः घिमिरे- प्रभृतीनां महानुभावानां कार्यदलेन परिमार्जितं सम्पादितञ्चास्ति । अस्य पाठ्यपुस्तकस्य विकासे पाठ्यक्रमसिद्धान्तसंरचनयोः

नवीनतमधारणामनुसृत्य परम्परागतानां शिल्पानामनुसरणं कृतमस्ति । अस्मिन् कार्ये अस्य केन्द्रस्य महानिर्देशकः अणप्रसादः न्यौपाने, डा. ऋषिरामः रेग्मी, डा. पुरुषोत्तमः भट्टराई, मनोजः घिमिरे, टुकराजः अधिकारी-प्रभृतीनां महानुभावानां विशेषसहयोगो विद्यते । अस्य चित्राङ्कनं टङ्कणं रूपसज्जा चेत्यादिकं सन्तोषकुमारः दाहाल इत्याख्येन महानुभावेन कृतमस्ति ।

पाठ्यपुस्तकं शिक्षणप्रक्रियाया महत्त्वपूर्णसाधनं भवतीति नाविदितं शेमुषीमताम् । सानुभवाः शिक्षकाः, जिज्ञासवश्छात्राः, सविधिकर्मकराश्च पाठ्यक्रमलक्ष्यीकृतान् विषयान् नैकविधस्रोतसां साधनानाञ्चोपभोगेन अध्यापयितुमध्येतुं कर्म कर्तुं च प्रभवन्ति । अनेकैः कारणैः सर्वेष्वेव विद्यालयेषु सरलतया पाठ्योपकरणानामुपलब्धेरभावाद् अध्ययनकार्यं केवलं पाठ्यपुस्तकाश्रितं भवतीति तथ्यमात्मसात्कृत्य प्रस्तुतमिदं पाठ्यपुस्तकं यथासम्भवं स्तरयुतं विधातुं प्रयासो विहितः, तथापि पाठ्यपुस्तकेऽस्मिन् यत्र यत्र त्रुटयोऽल्पताश्च विदुषां दृष्टिपथमागच्छेयुस्तत्र तत्र परिष्कारे परिवर्धने च दृग्गोचरीभूतानां त्रुटीनां परिमार्जनादिकार्यजाताय परामर्शप्रदानविधौ शिक्षकच्छात्राभिभावकपाठकविशेषज्ञानां महती प्रभावकारिणी भूमिका भवति । अत उक्तविषयेषु रचनात्मकपरामर्शदानेनोपकर्तुं पाठ्यक्रमविकासकेन्द्रमिदं तांस्तान् सर्वानेव महानुभावान् सप्रश्रयमभ्यर्थयते ।

नेपालसर्वकारः
शिक्षाविज्ञानप्रविधिमन्त्रालयः
पाठ्यक्रमविकासकेन्द्रम्

# विषयसूची

प्रथमः पाठः

# प्रारम्भिकपूजाक्रमः

## महत्त्वम्

अस्माकं पौरस्त्यपरम्परायाम् आब्रह्मस्तम्बपर्यन्तानां पूजा क्रियते। वयं भूमिमेव न, सूर्यचन्द्रमसौ चार्चयामः। वयं देवता एव न, वृक्षपाषाणादीनपि पूजयामः। अस्माकं कृते संसारेऽस्मिन् ये समुपकारकास्ते सर्वे पूज्याः सन्ति। तेषां पूजाविधिश्चानेकविधः। परन्तु पूजानां प्रायशो विषयाः समाना एव। वेदमधिकृत्यैव सनातनपरम्परयास्मदीयाः संस्काराः पद्धतयश्च प्रचलन्तः सन्ति। सर्वासां पूजानां प्रारम्भो गणपत्यादिदेवतानां स्मरणपूर्वकं भवति। पञ्चगव्यप्राशनम्, पवित्रनिर्माणम्, कर्मपात्रनिर्माणम्, प्रायश्चित्तगोदानम्, प्रतिज्ञासङ्कल्पः, मङ्गलाचरणम्, ब्राह्मणवरणम्, पुण्याहवाचनम्, दीपकलशगणेशपूजनम्, रक्षासूत्रपूजनमित्यादयो विषयाः सर्वासु पूजासु साम्येनैव समायान्ति। अतस्तान् विषयान् प्रतिपाद्य विद्यार्थिनां सरलबोधाय प्रयोगाय प्रारम्भिकपूजाविधिज्ञानाय च सामग्रीसहितोऽयं क्रमः प्रथमे पाठेऽस्मिन् प्रस्तुतो विद्यते।

## सामान्यपूजासामग्री

बेसार, नरिवल, पूजाका भाँडा, कामविशेषमा चाहिने अर्घौतो, त्रिकूटी, कर्मपात्र, दियो, कलश, पञ्चपात्रहरू, आसनहरू, दुना, बोहोता, टपरी, सर्सिउँ, काँचो धागो, पञ्चरङ्गी धागो, धान, चामल, रातो, सेतो र आवश्यकता अनुसारका कपडाहरू, रेखीको पिठो,

---

## शिक्षकनिर्देशनम्

१. स्वस्तिवाचनमन्त्राणां सम्यगुच्चारणाय शिक्षयत।
२. स्वस्तिवाचनमन्त्राणाञ्च कण्ठस्थीकरणाय प्रतिबोधयत।
३. शुद्धरूपेण दीपादिपूजनाय क्रमज्ञानाय च शिक्षयत।
४. पुण्याहवाचनप्रक्रियां प्रदर्शयत।
५. कक्षायाम् एकं विद्यार्थिनमाचार्यं मत्वा सर्वान् छात्रान् यजमानान् कल्पयित्वा पुण्याहवाचनस्य प्रकारं यथा- ॐ पुण्याहं भवन्तो ब्रुवन्तु-३ इत्यादिशैलीं शिक्षयत।
६. प्रारम्भिकपूजाक्रमस्यावश्यकतां बोधयत।

अबीर, केसरी, कपूर, तिल, जौ, फूल, माला, फल, नैवेद्य, कुश, पञ्चामृत, (दुध, दही, घिउ, मह, चिनी र मिश्रित पञ्चामृत) गङ्गाजल, सर्वौषधि, सप्तमृत्तिका, पञ्चरत्न, जनै, सुपाडी, धूपबत्ती, घिउ वा तेल, ल्वाङ, कपूर, पान, पानमसला, सिन्दूर, चन्दन, दुबो, पञ्चपल्लव (आँप, पिपल, वर, डुम्री र पाखरीका पातहरू) सलाई, इँटा, बालुवा, माटो (पैंयू, केरा-उखु-बास-मालिङ्गो आदिका मण्डप बनाउने लिङ्गाहरू) तोरण, लावा, पञ्चमेवा, बाह्र मसला, पञ्चगव्य आदि । (हरेक कर्मअनुसार तथा आवश्यकता अनुसार मात्रा र सङ्ख्या फरक पर्दछ) ।

## पञ्चगव्यनिर्माणं प्राशनविधिश्च

गोमूत्रगोमयक्षीरदधिसर्पिकुशोदकानां सविधिमेकत्रीकरणं पञ्चगव्यम् । तस्य मेलनं समन्त्रकं भवति । संस्कारो यथाविधिः क्रियते । संस्कृतस्य पञ्चगव्यस्य प्राशनादेव शुद्धिर्जायते । जाताऽऽशौचान्ते मृताऽऽशौचान्ते तथा उपाकर्मकोटिहोमसप्ताहादिनैमित्तिकशुभकर्मारम्भे च शरीरशुद्ध्यर्थं पञ्चगव्यप्राशनस्यावश्यकत्वादत्र पञ्चगव्यविधिः प्रस्तूयते ।

तद्यथा

**पञ्चगव्यं पवित्रं तु आहरेत्ताम्रभाजने ।**

**गायत्र्याश्चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥**

**आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।**

**तेजोसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ॥**

## अथ पञ्चगव्यनिर्माणविधिः

**ॐ तत्सवितु** ... ... इत्यनेन गोमूत्रम् ।

**ॐ गन्धद्वारान्दुराधर्षां नित्यपुष्टां करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥** इत्यनेन गोमयम् ।

**ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।**

**भवा वाजस्य सङ्गथे ॥** इत्यनेन क्षीरम् ।

**ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।**

**सुरभिनो मुखाकरत्प्रणऽआयूꣳषि तारिषत् ॥** इत्यनेन दधि ।

**ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि ।**

**प्रियं देवाना मना धृष्टन्देवयजनमसि** ॥ इत्यनेन आज्यम् ।

**ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्** ।

**अग्नये जुष्टं गृह्णाम्यग्निषोमाभ्याञ्जुष्टं गृह्णामि** ॥ इत्यनेन कुशोदकम् ।

ततो गायत्रीमन्त्रेण दशवारं सम्मन्त्र्य प्राशयेदनेन मन्त्रेण

**ॐ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके** ।

**प्राशनात्पञ्चगव्यस्य दहत्वग्निरिवेन्धनम्** ॥

*॥ इति पञ्चगव्यनिर्माणप्राशनविधिः ॥*

(क) आचमनम् **ॐ केशवाय स्वाहा..........**

(ख) प्राणायामः **ॐ चिद्रूपिणि** ..................

(ग) शिखाबन्धनम् **ॐ भूः ॐ भुव ॐ स्वः...........**

(घ) आसनशुद्धिः **ॐ पृथ्वि त्वया.................**

(ङ) भगवत्स्मरणं कुर्यात् ।

## कर्मपात्रनिर्माणम्

कर्मपात्रं विधाय कर्म कर्तव्यम् । तद्यथा **यद्देवा देवहेडन**मिति कण्डिकात्रयेण देवानावाह्य पवित्रं गन्धादिकं च स्वस्वमन्त्रेण क्षिप्त्वा कर्मपात्रं कुर्यात् ।

तत्र स्वस्य दक्षिणे ताम्रपात्रं निधाय तत्पात्रं स्पृशन्

**ॐ यद्देवा देव हेडनन्देवासश्चकृमा वयम्** ।

**अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वᳯंहसः** ।

**ॐ यदि दिवा यदि नक्तमेनाᳯंसि चकृमा वयम्** ।

**वायुर्मा तस्मादेनसो विश्वान् मुञ्चत्वᳯंहसः** ।

**ॐ यदि जाग्रद्यदि स्वप्नऽएनाᳯंसि चकृमा वयम्** ।

**सूर्यो मा तस्मादेनसो विश्वान् मुञ्चत्वᳯंहसः** ॥ इति कण्डिकात्रयेण देवानावाह्य

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः** ।

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्** ॥ इति मन्त्रेण पवित्रं क्षिपेत् ।

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥** इति जलम् ।

**ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ।**

**प्रत्नमद्भिः पृक्तः स्वधया पितृँल्लोकान् प्रिणाहि नः स्वाहा ॥** इति तिलान् ।

**ॐ श्रीश्च ते लक्ष्मीश्च पत्क्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।**

**इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥** इति पुष्पम् ।

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥** इति चन्दनम् ।

**ॐ अक्षन्नमीमदन्त ह्यवप्रियाऽअधूषत ।**

**अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥** इत्यक्षतान् ।

ततः कुशत्रयसहितं कर्मपात्रोदकमादाय

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

इति पूजाद्रव्याणि आत्मानं च सिञ्चेत् ।

*॥ इति कर्मपात्रनिर्माणविधिः ॥*

## भूतापसारणम्

**ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः ।**

**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**

**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।**

**सर्वेषामविरोधेन पूजाकर्म समारभे ॥** इत्यनेन भूमौ सर्षपान् विकिरेत् ।

## स्वस्तिवाचनम्

दूर्वाक्षतपुष्पाणि गृहीत्वा **ॐ आनो भद्राः** इत्यादिस्वस्तिवाचनमन्त्रान् पठेत्

**ॐ आनो भद्राः क्रतवो यन्तु विश्वतो दब्धासोऽअपरीतासऽउद्भिदः ।**

**देवानो यथा सदमिद्वृधेऽअसन्नप्रायुवो रक्षितारो दिवे दिवे ॥ १ ॥**

**देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳरातिरभिनो निवर्तताम् ।**

**देवानाꣳसख्यमुपसेदिमा वयं देवा नऽआयुः प्रतिरन्तु जीवसे ॥ २ ॥**

**तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।**

**अर्यमणं वरुणꣳसोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ ३ ॥**

**तन्नो वातो मयोभुवातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।**

**तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्यायुवम् ॥ ४ ॥**

**तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ।**

**पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥**

**स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।**

**स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥**

**पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः ।**

**अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसा गमन्निह ॥७ ॥**

**भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**

**स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यसेमहि देवहितं यदायुः ॥ ८ ॥**

**शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।**

**पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ९ ॥**

**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।**

**विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ १० ॥**

**द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ।**

**वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ११ ॥**

**यतो यतः समीहसे ततो नोऽअभयं कुरु ।**

**शं नः कुरु प्रजाभ्योभयन्नः पशुभ्यः ॥ १२ ॥**

ॐ श्रीमन्महागणाधिपतये नमः । लक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । वाणीहिरण्यगर्भाभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातापितृचरणकमलेभ्यो नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः ।

ॐ वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ १ ॥
ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ २ ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ ३ ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ४ ॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ ५ ॥
अभीप्सितार्थसिद्धयर्थं पूजितो यः सुराऽसुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ६ ॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ! ।
शरण्ये त्र्यम्बके गौरि नारायणि ! नमोऽस्तु ते ॥ ७ ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ ८ ॥
तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते ! तेऽङ्घ्रियुगं स्मरामि ॥ ९ ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ १० ॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ११ ॥
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ १२ ॥
स्मृतेः सकलकल्याणं भाजनं यत्र जायते ।

**पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ १३ ॥**

**सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ।**

**देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ १४ ॥**

**विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ।**

**सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥ १५ ॥**

## अर्घ्यस्थापनं सूर्यार्घ्यदानञ्च

स्वस्य दक्षिणे भागे पिष्टातकेन त्रिकोणं षट्कोणं वा विलिख्य तत्र त्रिपादिकां निधाय तस्योपरि अर्घ्यपात्रं संस्थाप्य तस्मिन् पात्रे जलं क्षीरं दधि कुशाग्राणि, अक्षतान् तिलान् यवान् सर्षपान् दूर्वाङ्कुराणि पुगीफलं च प्रक्षिप्य गन्धपुष्पादिभिः सम्पूज्य

**ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ।**

**नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥**

इत्यनेन गङ्गादितीर्थजलं च अर्घ्यपात्रे क्षिपेत् । ततो द्वादशकलात्मने सूर्यमण्डलाय नमः । दशकलात्मने वह्निमण्डलाय नमः । षोडशकलात्मने चन्द्रमण्डलाय नमः । एभिर्मन्त्रैस्तद्तन्मण्डलं परिकल्प्य मत्स्यधेन्वङ्कुशशङ्खमुद्रान् प्रदर्श्य सूर्यायार्घ्यं दद्यात् ।

**ॐ एहि सूर्य सहस्रांशो ! तेजोराशे ! जगत्पते ! ।**

**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ! ॥**

इत्यनेन सूर्यायार्घ्यं दत्त्वा सूर्यमुपस्थाय प्रतिज्ञासङ्कल्पं कुर्यात् ।

## प्रतिज्ञासङ्कल्पः

यजमानः हस्ते जलाक्षतद्रव्याणि समादाय प्रतिज्ञासङ्कल्पं कुर्यात्

ॐ तत्सत् ३ । विष्णुर्विष्णुर्विष्णुः । श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोह्निद्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे सत्यत्रेताद्वापरान्ते बौद्धावतारे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतब्रह्मावर्तैकनेपालदेशे ... इह पुण्यभूमौ षष्टिसंवत्सराणां मध्ये अमुकनाम्नि संवत्सरे श्रीसूर्ये अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं

गुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोत्पन्नः अमुकप्रवरः अमुकशर्मा (वर्मा, गुप्तः) अहं मम इह जन्मनि जन्मान्तरे वा सर्वपापक्षयपूर्वकं दीर्घायुर्विपुल-धन-धान्य-पुत्र-पौत्रादि-अनवच्छिन्न-सन्ततिवृद्धि-स्थिरलक्ष्मी-कीर्तिलाभ-शत्रुपराजय-सदभीष्टसिद्ध्यर्थं (अमुक) कर्म करिष्ये। तदङ्गत्वेन स्वस्तिवाचनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं ब्राह्मणवरणं दीपकलशगणेशादिदेवानां पूजनञ्च करिष्ये।

इति प्रतिज्ञाय प्रायश्चित्तगोदानं कुर्यात्।

## प्रायश्चित्तगोदानम्

यजमानोऽग्नेः पश्चिमभागे प्राङ्मुख उपविश्य उदङ्मुखेभ्य आचार्यऋत्विगादिभ्यो दक्षिणां दद्यात्।

तत्रादौ गोपूजनम् -

**ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयिभ्य एव च।**

**नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः॥**

**ॐ इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या।**

**व्यस्कभ्ना रोदसी विष्णवे ते दाधर्थप्पृथिवीमभितो मयूखैः स्वाहा॥**

इति मन्त्रद्वयेन गां त्रिः सम्पूज्य -

**ॐ आ कृष्णेन रजसा व्वर्तमानो निवेशयन्नमृतं मर्त्यञ्च।**

**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥**

इति मन्त्रेण ब्राह्मणं त्रिः सम्पूजयेत्।

ततः कुशजलेन गामभ्युक्ष्य गोपुच्छं गृहीत्वा पूर्वं तर्पयित्वा पश्चात् स्वशिरसि अभिषिञ्चेदनेन मन्त्रेण -

**ॐ मनो मे तर्प्पयत व्वाचं मे तर्प्पयत प्राणं मे तर्प्पयत चक्षुर्म्मे तर्प्पयत श्रोत्रं मे तर्प्पयतात्मानं मे तर्प्पयत प्रजां मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणा मे मा व्वितृषन्।**

ततः कुशादिसहितं गोपुच्छमादाय -

अद्येह पूर्वसङ्कल्पसिद्धिरस्तु ... गोत्रोत्पन्नोऽहं मम कायिक-वाचिक-मानसिक-सांसर्गिक ादि-सकलदोषपरिहारपूर्वकं श्रीपरमेश्वरप्रीत्यर्थं भक्ष्याभक्ष्य-लेह्यालेह्य-चोष्याचोष्य-स्प

र्शास्पर्शादिसमस्तदोषनिवारणपूर्वकं सपरिवारस्य श्रीकृष्णस्य रमासहितसत्यनारायणस्य (... इत्यादि स्वकार्यानुसारेण) पूजनं कथाश्रवणाद्यधिकारसिद्धये तथा च पूर्वदिनतः पालनीय-सकलनियमपालनाशक्त्या तज्जन्यदोषशमनपूर्वकं कर्तृत्वाद्यधिकारप्राप्तये इह पाञ्चभौतिकदेह-शुद्ध्यर्थं च इमां सर्वप्रायश्चित्तप्राजापत्यानुकल्पीभूतां गां गोरभावे तत्प्रत्याम्नायी भूतं व्यवहारोप-कल्पितं द्रव्यं विष्णुदैवताकं ... गोत्राय ... शर्मणे ब्राह्मणाय प्रायश्चित्तगोदानत्वेन तुभ्यमहं सम्प्रददे । ॐ तत्सन्न मम । ॐ स्वस्तीति प्रतिवचनम् ।

## गोप्रार्थना

**ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मात्तस्माच्छान्तिं प्रयच्छ मे ।**

**गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।**

**गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥**

## ततो दानप्रतिष्ठा

द्रव्यं सम्पूज्य

ॐ अद्य कृतैतत् सर्वप्रायश्चित्तनिमित्तकगोदानकर्मणः (गोप्रत्याम्नायीभूतद्रव्यदानकर्मणो वा) प्रतिष्ठासाङ्गतासिद्ध्यर्थम् इदं व्यवहारोपकल्पितदानप्रतिष्ठाद्रव्यं विष्णुदैवताकं पूर्वोक्तगोग्रहित्रे ..... गोत्राय ..... शर्मणे ब्राह्मणाय गोदानदानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । ॐ तत्सन्न मम ।

**ॐ कोदात् कस्मा अदात्०** इति ब्राह्मणो पठेत् । गोपुच्छेनाभिषेकं कृत्वा तत्रस्थजलेन ॐ तच्चक्षुरिति मन्त्रेण चक्षुःस्पर्शः कार्यः ।

## अथ ब्राह्मणवरणम्

तत्रादौ कुशतिलजलयुतगन्धपुष्पाक्षतताम्बूलपूगीफलवस्त्रद्रव्याभरणादीन्यादाय

हरिॐतत्सत् ३ ।ॐविष्णुः ३ इत्यादिदेशकालादीन् सङ्कीर्त्य (अमुक) गोत्रः (अमुक) प्रवरः (अमुक) शर्माहं मम (अमुक) कर्मणि पूजनोपयोग्याचारकर्म कर्तुं मन्त्रजपपाठकर्म कर्तुं वा नानानामगोत्रान् नानानामशर्मणो ब्राह्मणानेभिश्चन्दनपुष्पाक्षतताम्बूल-पूगीफलवासोद्रव्याभरणादिभिः (द्रव्यादिभिर्वा) आचार्यत्वेन जापकपाठकत्वेन वा युष्मानहं वृणे । ॐ वृताः स्म इति ब्राह्मणाः ब्रूयुः । यथा विहितं कर्म कुरुत । करवामः ।

गन्धादिभिः सम्पूज्य प्रार्थयेत्

**ॐ ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः ।**
**वेदानां चैव दातारः पातारः सर्वदेहिनाम् ॥**
**जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः ।**
**देवानां च पितृणां च तृप्त्यर्थं पाठकाः कृताः ॥**
**येषां देहे स्थिताः वेदाः पावयन्ति जगत्त्रयम् ।**
**रक्षन्तु सततं तेऽस्मान् जपयज्ञे व्यवस्थिताः ॥**
**ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ।**
**येषां वाक्यामृतेनैव शुद्धचन्ति मलिना जनाः ॥**
**पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ।**
**सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ॥**
**श्रोत्रियाः सत्यवाचश्च वेदध्यानरताः सदा ।**
**यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥**
**अङ्गीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः**
**यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ॥**
**यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ।**
**मम यज्ञे सदा पूज्याः सन्तु वै नियमान्विताः ॥**
**अक्रोधनाः शौचपराः सततं ब्रह्मवादिनः ।**
**जपध्यानरता नित्यं प्रसन्नमनसः सदा ॥**
**अदुष्टभाषिणः सन्तु मा सन्तु परनिन्दकाः ।**
**ममापि नियमा ह्येते भवन्तु भवतामपि ॥**

*॥ इति ब्राह्मणप्रार्थना ॥*

## पुण्याहवाचनम्

गन्ध-पुष्प-अक्षता-ताम्बूल-पूगीफल-द्रव्य-वस्त्रादिभिस्त्रीश्ँचतुरः पञ्च वा अविधुरान् ब्राह्मणान् सम्पूज्य हस्ते फलादिकं गृहीत्वा सङ्कल्पं कुर्यात् ।

ॐ तत्सत् ॐ विष्णुरित्यादि देशकालौ स्मृत्वा अद्येहामुकगोत्रस्यामुकशर्मणो (क्षत्रिययजमानस्य अमुकवर्मणः, वैश्यस्य अमुकगुप्तस्य इति वक्तव्यम्) मम गृहेऽमुककर्मणि भो ब्राह्मणाः **ॐ पुण्याहं भवन्तो ब्रुवन्तु** इति त्रिः श्रावयेत् । ब्राह्मणाश्च **ॐ पुण्याहम्** इति त्रिः प्रतिवचनं ब्रूयुः ।

**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।**

**पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥**

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य भो ब्राह्मणाः **ॐ स्वस्ति भवन्तो ब्रुवन्तु** इति त्रिः श्रावयेत् । "ॐ स्वस्ति" इति त्रिः प्रतिवचनम् ।

**ॐ स्वस्ति नऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः ।**

**स्वस्ति नस्ताक्षर्योऽ अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥**

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य भो ब्राह्मणाः **ॐ ऋद्धिं भवन्तो ब्रुवन्तु** इति त्रिः । "ॐ ऋद्धिः" इति त्रिः प्रतिवचनम् ।

**ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृताऽअभूम ।**

**दिवं पृथिव्याऽअध्यारुहामा व्विदाम देवान्त्स्वज्ज्योतिः ॥**

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य भो ब्राह्मणाः **ॐ वृद्धिं भवन्तो ब्रुवन्तु** इति त्रिः ।

ॐ वृद्धिः इति त्रिः प्रतिवचनम् ।

**ॐ ज्यैष्ठयञ्च मऽआधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे व्वरिमा च मे प्रथिमा च मे व्वर्षिमा च मे द्राघिमा च मे व्वृद्धञ्च मे व्वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥**

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य भो ब्राह्मणाः **ॐ कल्याणं भवन्तो ब्रुवन्तु** इति त्रिः । "ॐ कल्याणम्" इति त्रिः प्रतिवचनम् ।

**ॐ यथेमां व्वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्याꣳशूद्राय चार्याय च स्वाय चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्धयतामुपमादो नमतु ॥**

पुनः पूर्ववत् अद्येहेत्याद्युच्चार्य भो ब्राह्मणाः **ॐ श्रियं भवन्तो ब्रुवन्तु** इति त्रिः । "ॐ श्रीः" इति त्रिः प्रतिवचनम् ।

**ॐ मनसः काममाकूतिं वाचः सत्यमशीय ।**
**पशूनाᳫँरूपमन्नस्य रसो यशः श्रीः श्रयताम् ॥**

*॥ इति पुण्याहवाचनम् ॥*

## षोडशोपचारे विविधाः पक्षाः

### १. षोडशोपचारपूजनक्रमः

१. आसनम् २. पाद्यम् ३. अर्घ्यम् ४. आचमनीयम् ५. पञ्चामृतम् ६. वस्त्रम् ७. चन्दनम् ८. अक्षताः ९. पुष्पाणि १०. धूपः ११. दीपः १२. नैवेद्यम् १३. द्रव्यम् १४. पादवन्दनम् १५. आरार्तिक्यम् १६. नमस्कारः ।

### २. वाजसनेयिनां षोडशोपचाराः

१. आवाहनम् २. आसनम् ३. पाद्यम् ४. अर्घ्यम्, ५. आचमनीयम् ६. स्नानं पञ्चामृतं शुद्धोदकञ्च ७. वस्त्रम् ८. यज्ञोपवीतम् ९. चन्दनम् (अक्षताः) १०. पुष्पम् ११. धूपः १२. दीपः १३. नैवैद्यम् (ताम्बूलम्) १४. दक्षिणाद्रव्यम् १५. आरार्तिक्यम्, प्रदक्षिणा १६. मन्त्रपुष्पाञ्जलिः नमस्कारः ।

## दीपपूजा

तत्र **स्थिरो भवे**ति दीपं प्रज्वालयेत्

**ॐ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् ।**
**पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः ॥**

**पृष्टो दिवी**ति पूजनम्

**ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽओषधीराविवेश ।**
**वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम् ॥**

इति पाद्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्

**ॐ शुभं भवतु कल्याणमारोग्यं सुखसम्पदः ।**
**आत्मज्योतिः प्रकाशाय दीपज्योतिर्नमोऽस्तु ते** ॥ इति ।

## कलशपूजा

तत्र वेद्या ईशानदिग्भागे अव्रणं दध्यक्षतादिभूषितं कलशं धान्योपरि स्थापयित्वा पूजयेत् । तत्प्रकारश्च यथा **भूरसी**ति भूमिशोधनम्

**ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीं मा हिꣳसीः ॥**

**धान्यमसी**ति धान्यं स्थापयेत्

**ॐ धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसीतिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥**

**आजिघ्रकलश**मिति धान्योपरि अव्रणं कलशं स्थापयेत्

**ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरुर्ज्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः ॥**

**वरुणस्योत्तम्भनमसी**ति कलशे तीर्थादिजलं प्रक्षिपेत्

**ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनी स्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद ॥**

**या ओषधी**रिति सर्वौषधीः प्रक्षिपेत्

**ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनु ब्बभ्रूणामहꣳशतं धामानि सप्त च ॥**

**हिरण्यगर्भ** इति पञ्चरत्नानि

**ॐ हिरण्यगर्ब्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।**
**स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा व्विधेम ॥**

**याः फलिनी**रिति पूगीफलादीनि

**ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।**
**बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥**

**ओषधय** इति यवान्

**ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तꣳराजन्पारयामसि ॥**

**गन्धद्वारा**मिति चन्दनम्

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।**

**काण्डात्काण्डा**दिति दूर्वा

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥**

**स्योना पृथिवी**ति सप्तमृत्तिकाः

**ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥**

**अश्वत्थेव** इति पञ्चपल्लवैस्तन्मुखमाच्छाद्य

**ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ।**

**बृहस्पतेऽअती**ति वस्त्रयुग्मेन कलशं वेष्टयेत्

**ॐ बृहस्पतेऽअति यदर्योऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु ।**

**यद्दीदयच्छवसऽऋत प्रजात तदस्मासु द्रविणं धेहिचित्रम् ।**

**उपयामगृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पतये त्वा ॥**

**अम्बेऽअम्बिके** इति आम्रपल्लवैस्तन्मुखमाच्छाद्य

**ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन ।**

**ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥**

**तत्त्वा यामी**ति मन्त्रेण वरुणमावाह्य पूजयेत्

**ॐ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**

**अहेडमानो वरुणेह बोध्युरुश ँ् स मा नऽआयुः प्रमोषीः ॥**

ततः कलशे गङ्गादितीर्थान्यावाहयेत्

**ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥**

कलशं स्पृष्ट्वाभिमन्त्रयेत्

**ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।**

**मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥**

**कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।**

**ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥**

**अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।**

ततः कलशप्रार्थना

**ॐ देवदानवसंवादे मथ्यमाने महोदधौ ।**

**उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥**

**त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।**

**त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥**

**शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।**

**आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥**

**त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।**

**त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥**

**सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ।**

**नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ।**

**सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते** ॥ इति ।

## गणेशपूजा

हस्ते कुशादिकमादाय सङ्कल्पं कुर्यात्

ॐ अद्येहेत्यादि (अमुक) कर्म निर्विघ्नपरिसमाप्त्यर्थममुककर्माङ्गतया गणेशपूजनमहं करिष्ये । इति सङ्कल्प्य **"ॐ गणानान्त्वा" "हे हेरम्ब"** इत्यादिमन्त्रैरावाहयेत् ।

**ॐ गणानान्त्वा गणपति ँ हवामहे प्रियाणान्त्वा प्रियपति ँ हवामहे निधीनान्त्वा निधिपति ँ हवामहे व्वसो मम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥**

**ॐ हे हेरम्ब त्वमेहचेहि अम्बिका त्र्यम्बकात्मज ॥**

**सिद्धिबुद्धिपते त्र्यक्ष लक्ष्यलाभयितः पितः ॥**

**नागस्य नागहार त्वं गणराज चतुर्भुज ।**

**भूषितैः स्वायुधैर्दिव्यैः पाशाङ्कुशपरस्वधैः ॥**

**आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ।**

**इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष माम् ॥**

इत्यावाह्य

ॐ भूर्भुवः स्वः गणपतये सिद्धिबुद्धिसहिताय साङ्गाय सायुधाय सवाहनाय सपरिवाराय इदमासनं समर्पयामि । ततः **सहस्रशीर्षे**त्यादिषोडशमन्त्रैः षोडशोपचारैः पूजयेत् ।

तद्यथा

आसनं पाद्यम् अर्घ्यम् आचमनीयं पञ्चामृतं शुद्धोदकम् उत्तरीयवस्त्रं यज्ञोपवीतं चन्दनं दूर्वा अक्षताः धूपः दीपः नैवेद्यम् आचमनीयं ताम्बूलं वस्त्रालङ्कारादियल्लब्धं दक्षिणाद्रव्यं पादवन्दनम् एभिः सम्पूज्य नारिकेलादिफलं सवस्त्रं पुरतः पात्रे निधाय स्तुतिं कुर्यादनेन

**ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षकः ।**

**भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥**

**द्वैमातुर कृपासिन्धो षाण्मातुर जगत्प्रभो ।**

**वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥**

**अनेन फलदानेन सफलोऽस्तु सदा मम ।**

**वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ ।**

**अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥**

**ॐ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ।**

**नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥**

## रक्षाबन्धनपूजा

यवकुशदूर्वासर्षपचन्दनगोमयहरिद्रादधिसहितां रक्षां ताम्रपात्रे निधाय पात्रं स्पृशन् नारायणकवचं पठेत्

**ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः ।**

**याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥**

**वारुण्यां केशवो रक्षेद् वायव्यां मधुसूदनः ।**

**उत्तरे श्रीधरो रक्षेदधस्तात्तु महीधरः ॥**

**एवं दशदिशो रक्षेद् वासुदेवो जनार्दनः ।**

**यज्ञाग्रे रक्षताच्छङ्खः पृष्ठे वै पद्ममुत्तमम् ॥**

**वामपार्श्वे गदा रक्षेद् दक्षिणे तु सुदर्शनः ।**

**उपेन्द्रः पातु ब्रह्माणमाचार्यं पातु वामनः ॥**

**ऋग्वेदमच्युतो रक्षेद्यजुर्वेदमधोक्षजः ।**

**कृष्णो रक्षतु सामानमथर्वाणञ्च माधवः ॥**

**उपविष्टाँश्च विप्राँस्ताननिरुद्धोऽभिरक्षतु ।**

**यजमानं सपत्नीकं पुण्डरीकाक्ष एव तु ॥**

**रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षताद्धरिः ।**

**वेदमन्त्रैश्च कर्तव्या रक्षा शुभ्रैस्तु सर्षपैः ॥**

**कृत्वा पोटलिकां पूर्वं बध्नीयाद्दक्षिणे करे** । इति ।

ततो वक्ष्यमाणमन्त्रैरक्षासूत्रं पूजयेत्

**ॐ रक्षोहणं व्वलगहनं व्वैष्णवीमिदमहन्तं व्वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥**

**ॐ स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहा ॥**

**ॐ रक्षोहणो वो व्वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो व्वलगहनोऽवनयामि वैष्णवान्रक्षोहणो वो व्वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणौ वां व्वलगहनाऽउपदधामि व्वैष्णवी रक्षोहणौ वां व्वलगहनौ पर्यूहामि व्वैष्णवी व्वैष्णवमसि व्वैष्णवास्थ ॥**

**ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥**

*॥ इति रक्षाबन्धनपूजा ॥*

## कलशस्कन्धप्रदेशे गणपत्यादिदेवपूजा

ॐ गणपति-सूर्य-देवीशिवविष्णून् । विनायकदुर्गावाय्वाकाशाश्विनीकुमारान् । सूर्यसोम-भौम-बुध-बृहस्पति-शुक्र-शनि-राहु-केतून् ।

ईश्वरोमास्कन्दहरिब्रह्मेन्द्रयमकालचित्रगुप्तान् । अग्निअप्-भूमि-विष्णु-इन्द्र-इन्द्राणी-प्रजापति-सर्पब्रह्माणः । इन्द्राग्नि-यम-निर्ऋति-वरुण-वायु-सोमेशान-ब्रह्मानन्तान् । ध्रुवाद्यष्टवसून् । धात्रादि-द्वादशादित्यान् । वीरभद्राद्येकादश-रुद्रान् । गौर्यादि-षोडशमातृः । आवहादि-सप्तमरुतः । विनायक-ब्रह्म-विष्णु-रुद्रार्क-वनस्पतीन् । आत्मन इष्टदेवताकुलदेवताः । स्थानग्रामदेवताश्चावाह्य यथामिलितोपचारैः पञ्चोपचारैः (षोडशोपचारैर्वा) पूजयेत् ।

## वैदिकतान्त्रिकमन्त्रप्रयोगविषयः

अनेकविधपूजाप्रयोगेषु विविधप्रकारका मन्त्राः प्रयुज्यन्ते । चतुर्वेदानां पृथक् एव पूजनमन्त्राः सन्ति । कतिपय तान्त्रिकाश्च पूजनमन्त्राः प्राप्यन्ते । तेषां प्रयोगश्च पृथक् पृथगेव । यथा वैदिकैः तान्त्रिकैः वैदिकतान्त्रिकमन्त्रमिश्रितैश्च पूजनं प्राप्यते । नाममन्त्रेण केवलतान्त्रिकमन्त्रेण केवलवैदिकमन्त्रेण वैदिकतान्त्रिकमिश्रितप्रकारेण च भगवतः पूजनं भवति । शास्त्रनिर्दिष्टविधानेन नियमपूर्वकानुष्ठानाद् हि सदभीष्टसिद्धिर्भवति । अस्मदीयपूजापरम्परायां मिश्रितपरम्परा प्रचलिता वर्तते । अतः पूजनक्रमे यत्र पुरुषदेवानां प्रामुख्येन गृह्यते तत्र पुरुषसूक्तेन तथा च स्त्रीदेवतानां यत्र मुख्यत्वेन गृह्यते तत्र श्रीसूक्तमधिकृत्य पूजनं कर्तव्यम् । तत्र तत्तत्सूक्तमन्त्रसहिततान्त्रिकमन्त्रानपि योजनीयम् । यथा विष्णोरासनम्

**ॐ सहर्षशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।**
**सभूमिꣳसर्वतस्पृत्त्वाऽत्त्यतिष्ठद्दशाङ्गुलम् ॥**
**ॐ अनेकरत्नसंयुक्तं नानामणिसमन्वितम् ।**
**कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम् ॥**
विष्णवे नमः । आसनं समर्पयामि ।

एवं रीत्या पाद्यादीनि समर्पयेत् ।

विधिरयं गुरुसहायेन शिक्षणीयः । तेनैव प्रकारेण सति सम्भवे पूजा विधातव्या ।

## सर्वपूजोपयोगिपुरूषसूक्तम्

**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्त्रपात् ।**

स भूमिꣳसर्वत स्पृत्त्वाऽत्त्यतिष्ठ्ठद्दशाङ्गुलम् ॥ १ ॥

पुरुषऽएवेदꣳसर्वं यद्भूतं यच्च भाव्यम् ।

उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

एतावानस्य महिमातो ज्ज्यायाँश्श्च पूरुषः ।

पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत् पुनः ।

ततो विष्वङ् व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥

ततो व्विराडजायत व्विराजोऽअधि पूरुषः ।

स जातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम् ।

पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥

तस्माद्यज्ञात् सर्वहुतऽऋचः सामानि जज्ञिरे ।

छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥

तस्मादश्वाऽअजायन्त ये के चोभयादतः ।

गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥

तँ यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।

तेन देवाऽअयजन्त साध्याऽऋषयश्च ये ॥ ९ ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।

मुखं किमस्यासीत् किं बाहू किमूरू पादाऽउच्येते ॥ १० ॥

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।

ऊरू तदस्य यद्वैश्यः पद्भ्याꣳशूद्रोऽअजायत ॥ ११ ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत ।

श्श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥

नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णो द्यौः समवर्तत ।

पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२अकल्पयन् ॥ १३ ॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।

व्वसन्तोऽस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥ १४ ॥

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।

देवा यद्यज्ञं तन्वानाऽअबध्नन् पुरुषं पशुम् ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

## सर्वोपयोगिश्रीसूक्तम्

ध्यानम्

ॐ अरुणकमलसंस्था तद्रजः पुञ्जवर्णा

करकमलधृतेष्टाभीतियुग्माम्बुजा च ।

मणिमुकुटविचित्राऽऽलङ्कृतिः पद्ममाला

भवतु भुवनमाता सन्ततं श्रीः श्रियै नः ॥

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।

चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।

यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् ।

श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥३॥

कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।

पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।

तां पद्मिनीमीं शरणं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।

तस्य फलानि तपसा नुदन्तु या अन्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।

प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७ ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।

अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।

ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥

मनसः काममाकूतिं वाचः सत्यमशीमहि ।

पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥

कर्दमेन प्रजा भूता मयि सम्भव कर्दम ।

श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।

नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥

आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।

चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १३ ॥

आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।

सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १४ ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।

यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥१५॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।

सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ १६ ॥

*॥ इति श्रीसूक्तं समाप्तम् ॥*

**अथ सर्वदेवप्राणप्रतिष्ठाविधिः**

**(क) विनियोगः**

ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयो ऋग्यजुः सामाथर्वणश्छन्दांसि चैतन्यरूपा अपर्णा प्राणशक्तिर्देवता आं बीजं ह्रीं शक्तिः क्रौं कीलकं श्री ... देवस्य (देव्याः) प्राणप्रतिष्ठापने विनियोगः ।

**(ख) प्राणप्रतिष्ठा**

देवप्रतिमाम् अग्नौ प्रताप्य पञ्चगव्येन शुद्धजलेन च प्रक्षाल्य पात्रान्तरे निधाय जलेन संस्नाप्य यन्त्रमध्ये संस्थाप्य देवप्रतिमां कुशहस्तेन स्पृशन्

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं श्री .......... देवस्य (देव्याः) प्राणा इह प्राणाः ।**

**ॐ आं ह्रीं .......... श्री .......... देवस्य (देव्याः) जीव इह स्थितः ।**

**ॐ आं ह्रीं .......... श्री .......... देवस्य (देव्याः) सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्र-जिह्वा-घ्राण-पाणि-पाद-पायूपस्थानि इहागत्य यथा सुखं चिरं तिष्ठन्तु स्वाहा ।**

**ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमं दधातु । विश्वे देवासऽइह मादयन्तामोंꣳप्रतिष्ठ ॥**

**ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।**

**अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥**

भो ... ...! अस्यां प्रतिमायां सुप्रतिष्ठितः सुप्रसन्नः सुप्रीतो वरदो भव । यावत्पूजां करोमि तावत्त्वं सुस्थिरो भव ।

इति प्राणान् प्रतिष्ठाप्य ध्यानं कुर्यात् । तदनन्तरं यथालब्धोपचारैः पूजयेत् ।

द्वितीयः पाठः

# श्रीकृष्णजन्माष्टमीव्रतपूजाविधिः

## महत्त्वम्

श्रीकृष्णस्य मातुलः कंसः स्वां भगिनीं देवकीं जामातरं वसुदेवं च बन्धनगृहे स्थापितवान् । तेन श्रीकृष्णस्य जन्म बन्धनागारे एव बभूव । भाद्रमासीय-कृष्णपक्षस्याष्टमीतिथेः मध्यरात्रौ जननात् जनाः प्रतिवर्षम् अस्यामेव तिथौ श्रीकृष्णजन्मोत्सवं मानयन्ति । अस्मिन्दिने निशीथे व्रतं गृहीत्वा बालकृष्णस्वरूपं कल्पयित्वा गृहे स्थापितस्य श्रीकृष्णस्य प्रतिमायां शालग्रामशिलायां श्रीकृष्णमन्दिरेषु वा श्रीकृष्णस्य षोडशोपचारपूजनपूर्वकं सोल्लासं श्रीकृष्णजन्मोत्सवं कुर्वन्ति । अस्मिन् दिने ललितपुरस्य पाटनस्थिते श्रीकृष्णमन्दिरे राष्ट्रप्रमुखाः श्रीकृष्णदर्शनार्थं प्रतिवर्षं गच्छन्ति तथा परस्परं शुभकामनाश्च वितरन्ति ।

भगवतो जन्मोत्सवोऽस्माभिश्च मन्यते । यथा भगवतो जन्मोत्सवः क्रियते तथैवास्माकमपि जन्मोत्सवः प्रतिवर्षे कर्तव्यः इति शास्त्राशयः । मार्कण्डेयाद्यष्टचिरञ्जीवीनां पूजनेन आयुष्यादिवृद्धिः । ईश्वरं प्रति मान्यजनान् प्रति च कृतज्ञताज्ञापनाय श्रीकृष्णादीनां जन्मोत्सवविवाहोत्सवादयः मन्यन्ते । एतेन जीवात्मपरमात्मनोरस्ति विशेषसम्बन्ध इति ज्ञायते ।

## अथ पूजाविधिः

अथ व्रती भाद्रकृष्णपक्षीयाष्टमीतिथौ प्रातःकाले नित्यकर्म सम्पाद्य दिनम् उपवासादिना निनयेत् । निशीथव्यापिनी अष्टमी एवात्र ग्राह्या । रात्रौ श्रीकृष्णपूजनाय सामग्रीं सङ्कलय्य व्रती कर्मपात्रादिकं विधाय प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

देशकालादीन्नुल्लिख्य .......... गोत्रोत्पन्नोऽहं मम सपरिवारस्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थमन्ते वैकुण्ठलोकवासकामनया श्रीपरमेश्वरस्य श्रीकृष्णभगवतः प्रीतये दीपकलशगणेशादिदेवपूजनपूर्वकम् अद्य मध्यरात्रौ यथामिलितोपचारैः श्रीकृष्णजन्माष्टमीव्रताङ्गत्वेन सपरिवारस्य श्रीकृष्णस्य पूजनमहं करिष्ये । तदङ्गत्वेन ब्राह्मणवरणपुण्याहवाचनादिकञ्चाहं करिष्ये । इति सङ्कल्प्य पूजनादिकं सम्पाद्य रात्रौ कथाश्रवणादिना जागरणं विधाय प्रातः व्रतं समापयेत् ।

## पूजासामग्री

पूजासामग्री २ भाग, श्रीकृष्णको मूर्ति वा प्रतिमा, तस्विर, केरा, फलहरू, फूल, दही, मक्खन, मिस्री, मिष्ठान्न, श्रीकृष्णझूला (कोक्रो), तुलसी, माला, पञ्चामृत, दुध, दही, घिउ, मह, चिनी आदि ।

## अथ श्रीकृष्णजन्माष्टमीपूजाविधिः

स्वर्णमयीं श्रीकृष्णप्रतिमां समानीय अग्न्युत्तारणपूर्वकं स्थापयित्वा प्राणप्रतिष्ठां कुर्यात् ।

**ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳसमिमं दधातु । विश्वे देवासऽइह मादयन्तामो३म्प्रतिष्ठ** ॥

भो श्रीकृष्ण ! अस्यां प्रतिमायां सुप्रतिष्ठितः सुप्रसन्नः सुप्रीतो वरदो भव । यावत्पूजां करोमि तावत्त्वं सुस्थिरो भव । इति प्राणान्प्रतिष्ठाप्य ध्यायेत् ।

## तद्यथा

**ॐ पर्यङ्कस्थां किन्नराद्यैर्युतां ध्यायेत्तु देवकीम्** ।

**श्रीकृष्णं बालकं ध्यायेत्पर्यङ्के स्तनपायिनम्** ॥

**श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम्** ।

**संवाहयन्तीं देवक्याः पादौ ध्यायेच्च तां श्रियम्** ॥

एवं देवक्या सह श्रीकृष्णं ध्यायेत् ।

## तत आवाहनम्

**ॐ सहस्रशीर्षा...** ।

**ॐ आगच्छ भगवन् देव स्थाने चात्र स्थिरो भव** ।

**यावत्पूजां करिष्यामि तावत्त्वं सन्निधौ भव** ॥

ॐ देवक्यै नमः देवकीमावाहयामि । ॐ श्रीकृष्णाय नमः श्रीकृष्णमावाहयामि । एवं लक्ष्मीं देवकीसहितं वसुदेवं यशोदां नन्दं रामं चण्डिकां सकलपरिवारदेवाँश्चावाहयेत् । ततो मन्त्रपूर्वकं पूजयेत् । मन्त्रस्तु

**ॐ योगेश्वराय देवाय योगिनां पतये विभो** ।

**योगोद्भवाय नित्याय गोविन्दाय नमो नमः** ॥ इति ।

## आसनम्

**ॐ पुरुषऽएवेदम्... ।**

**नानारत्नसमायुक्तं कार्तस्वरविभूषितम् ।**

**आसनं देवदेवेश गृहाण पुरुषोत्तम ॥**

सपरिवाराय श्रीकृष्णाय नमः । आसनं समर्पयामि ।

## पाद्यम्

**ॐ एतावानस्य... ।**

**गङ्गादिसर्वतीर्थेभ्यो मयाऽऽनीतं सुशोभनम् ।**

**तोयमेतत्सुखस्पर्शं पाद्यं मे प्रतिगृह्यताम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । पाद्यं समर्पयामि ।

## अर्घ्यम्

**ॐ त्रिपादूर्ध्व... ।**

**जातः कंसवधार्थाय भूभारोत्तारणाय च ।**

**देवानां च हितार्थाय धर्मसंस्थापनाय च ॥**

**कौरवाणां विनाशाय पाण्डवानां हिताय च ।**

**गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ॥**

सपरिवाराय श्रीकृष्णाय नमः । अर्घ्यं समर्पयामि ।

## आचमनीयम्

**ॐ ततो विराट् ... ।**

**गङ्गाजलं समानीतं पवित्रं सुमनोहरम् ।**

**आचम्यतां सुरश्रेष्ठ कृपां कुरु ममोपरि ॥**

सपरिवाराय श्रीकृष्णाय नमः । आचमनीयं समर्पयामि ।

## स्नानम्

**ॐ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।**

**ताभ्यः स्नानार्थमानीतं गृहाण शिशिरं जलम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । स्नानं समर्पयामि ।

## मधुपर्कम्

**ॐ दधि मधु घृतं चैव एकीकृत्य समर्पितम् ।**

**मधुपर्कं जगन्नाथ स्नानार्थं प्रतिगृह्यताम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । मधुपर्कं समर्पयामि ।

## पञ्चामृतम्

**ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः ।**

**सरस्वती तु पञ्चधा सोऽदेशेऽभगवत्सरित् ॥**

सपरिवाराय श्रीकृष्णाय नमः । पञ्चामृतं समर्पयामि ।

## शुद्धोदकस्नानम्

**ॐ आपोऽअस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।**

**विश्वꣳहि रिप्रं प्रवहन्ति देवी रुदिदाभ्यः शुचिरापूतऽएमि ॥**

सपरिवाराय श्रीकृष्णाय नमः । शुद्धोदकस्नानं समर्पयामि ।

## वस्त्रम्

**ॐ तस्माद्यज्ञात्सर्वहुतः... ।**

**ॐ नवभिस्तन्तुभिर्युक्तं कार्तस्वरविभूषितम् ।**

**वस्त्रं गृहाण देवेश वासुदेव नमोऽस्तु ते ॥**

सपरिवाराय श्रीकृष्णाय नमः । वस्त्रं समर्पयामि ।

## यज्ञोपवीतम्

**ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः... ।**

**ॐ ब्रह्माद्यैः कल्पितं ह्येतद् ब्रह्मसूत्रं सुशोभनम् ।**

**त्रिगुणीकृत्य देवेश गृहाण मम भक्तितः ॥**

सपरिवाराय श्रीकृष्णाय नमः । यज्ञोपवीतं समर्पयामि ।

## अलङ्कारः

**ॐ तस्मादश्वा... ।**

**ॐ दिव्यरत्नसमायुक्ता वह्निभानुसमप्रभाः ।**

**गात्राणि शोभयिष्यन्ति ह्यलङ्काराः सुरेश्वर ॥**

सपरिवाराय श्रीकृष्णाय नमः । अलङ्कारान् समर्पयामि ।

## गन्धम्

**ॐ तं यज्ञम्... ।**

**ॐ श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।**

**विलेपनं सुरश्रेष्ठ गृहाण परमेश्वर ॥**

सपरिवाराय श्रीकृष्णाय नमः । गन्धं समर्पयामि ।

## अक्षताः

**ॐ अक्षन्नमीमदन्त... ।**

**ॐ यज्ञेश्वराय देवाय तथा यज्ञोद्भवाय च ।**

**योगीनां पतये नाथ गोविन्दाय नमो नमः ॥**

सपरिवाराय श्रीकृष्णाय नमः । अक्षतान् समर्पयामि ।

## तिलयवाः

**ॐ ओषधयः... ।**

**ॐ धान्यराजाः स्वमाङ्गल्या विष्णुप्रीतिकरा यवाः ।**

**तस्मादेषां प्रदानेन ममास्त्वविकलं फलम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । तिलयवान् समर्पयामि ।

## पुष्पाणि

**ॐ यत्पुरुषम्... ।**

**ॐ नानाविधानि पुष्पाणि नानावृक्षोद्भवानि च ।**

**तुलसीदलमिश्राणि अर्पितानि रमापते ॥**

सपरिवाराय श्रीकृष्णाय नमः । पुष्पाणि समर्पयामि ।

## अङ्गपूजा

ॐ गोविन्दाय नमः पादौ पूजयामि । ॐ माधवाय नमः जङ्घे पूजयामि । ॐ मधुसूदनाय नमः कटिं पूजयामि । ॐ पद्मनाभाय नमः नाभिं पूजयामि । ॐ हृषीकेशाय नमः हृदयं पूजयामि । ॐ सङ्कर्षणाम नमः स्तनौ पूजयामि । ॐ वामनाय नमः बाहू पूजयामि । ॐ दैत्यसूदनाय नमः हस्तौ पूजयामि । ॐ हरिकेशाय नमः कण्ठं पूजयामि । ॐ चारुमुखाय नमः मुखं पूजयामि । ॐ त्रिविक्रमाय नमः नासिकां पूजयामि । ॐ पुण्डरीकाक्षाय नमः नेत्रे पूजयामि । ॐ उपेन्द्राय नमः ललाटं पूजयामि । ॐ हरये नमः शिरः पूजयामि । ॐ श्रीकृष्णाय नमः सर्वाङ्गं पूजयामि ।

## धूपः

**ॐ ब्राह्मणोऽस्य... ।**

**ॐ वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । धूपमाघ्रापयामि ।

## दीपः

**ॐ चन्द्रमामनसः... ।**

**ॐ त्वं ज्योतिः सर्वदेवानां तेजस्त्वं तेजसां परम् ।**

**आत्मज्योतिर्नमस्तुभ्यं दीपोऽयं प्रतिगृह्यताम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । दीपं दर्शयामि ।

## नैवेद्यम्

**ॐ नाभ्याऽआसीत्... ।**

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**भूतानां जीवनं चैव नैवेद्यं प्रतिगृह्यताम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । नैवेद्यं निवेदयामि ।

## आचमनीयम्

**ॐ यत्पुरुषेण हविषा... ।**

**ॐ कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।**

**आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ॥**

सपरिवाराय श्रीकृष्णाय नमः । आचमनीयं समर्पयामि ।

## करोद्वर्तनम्

**ॐ हरिद्रां कुङ्कुमं चैव कर्पूरागरुमिश्रितम् ।**

**करोद्वर्तनकं देव स्थापितं पुरतस्तव ॥**

सपरिवाराय श्रीकृष्णाय नमः । करोद्वर्तनं समर्पयामि ।

## फलम्

**ॐ इदं फलं मया देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

सपरिवाराय श्रीकृष्णाय नमः । फलं समर्पयामि ।

## ताम्बूलम्

**ॐ नागवल्लीदलं ह्येतत् खादिरेण समन्वितम् ।**

**पूगीफलयुतं देव ताम्बूलं प्रतिगृह्यताम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । ताम्बूलं समर्पयामि ।

## दक्षिणा

**ॐ हिरण्यगर्भः समवर्त... ।**

**ॐ सौवर्णं राजतं ताम्रं नानारत्नसमन्वितम् ।**

**कर्मसाद्गुण्यसिद्ध्यर्थं दक्षिणां प्रतिगृह्यताम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । दक्षिणां समर्पयामि ।

## चामरव्यजने

**ॐ शशाङ्ककरसङ्काश हिमडिण्डिरपाण्डुर ।**

**प्रोत्सारयाशु दुरितं चामरामरवल्लभ ॥**

सपरिवाराय श्रीकृष्णाय नमः । चामरव्यजने दोलयामि ।

## आदर्शम्

**ॐ दर्शनेन त्वमादर्श नूनं मङ्गलदायक ।**

**शौर्यसौभाग्यसत्कीर्तिनिर्मलज्ञानदो भव ॥**

सपरिवाराय श्रीकृष्णाय नमः । आदर्शं दर्शयामि ।

ततो यथाशक्तिजपं कृत्वा निवेदयेत् ।

## नीराजनम्

**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि तेन नीराजयाम्यहम् ॥**

सपरिवाराय श्रीकृष्णाय नमः । नीराजयामि ।

## कर्पूरारार्तिक्यम्

**ॐ सूर्येन्दुतारकावह्निस्तेजः पुञ्जविराजितम् ।**

**कर्पूरदीपं देवेश गृहाण त्वं सुरेश्वर ॥**

सपरिवाराय श्रीकृष्णाय नमः । कर्पूरारार्तिक्यं समर्पयामि ।

## प्रदक्षिणा

**ॐ सप्तास्यासन्...** ।

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥**

सपरिवाराय श्रीकृष्णाय नमः । प्रदक्षिणां समर्पयामि ।

## पुष्पाञ्जलिः

**ॐ विश्वेश्वराय देवाय तथा विश्वोद्भवाय च ।**

**विश्वानां पतये तुभ्यं गोविन्दाय नमो नमः ॥**

सपरिवाराय श्रीकृष्णाय नमः । पुष्पाञ्जलिं समर्पयामि ।

## नमस्कारः

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥**

**ॐ अन्यत्र शरणं नास्ति त्वमेव शरणं मम ।**

**तस्मात्कारुण्यभावेन रक्ष मां जगदीश्वर ॥**

सपरिवाराय श्रीकृष्णाय नमः । नमस्करोमि ।

## क्षमापनम्

**ॐ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।**

**दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥**

चन्द्रपूजनम्

ततः सर्वोपचारपूजासमाप्तौ चन्द्रोदये द्वादशाङ्गुलविस्तारं रौप्यमयं स्थाल्यादौ चन्दनादिना लिखितं वा रोहिणीयुतं चन्द्रं पूजयेत् । मन्त्रस्तु

**ॐ सोमेश्वराय सोमाय तथा सोमोद्भवाय च ।**

**सोमस्य पतये नित्यं तुभ्यं सोमाय वै नमः ॥**

इति मन्त्रेण पाद्यादिषोडशोपचारैः सम्पूज्यार्घ्यं दद्यात् ।

**ॐ शङ्खतोयं समादाय सपुष्पफलचन्दनम् ।**

**जानुभ्यामवनिं गत्वा चन्द्रायार्घ्यं निवेदयेत् ॥**

## चन्द्रार्घ्यम्

**ॐ क्षीरोदार्णवसम्भूत अत्रिगोत्रसमुद्भव ।**

**गृहाणार्घ्यं शशाङ्केदं रोहिणीसहितो मम ॥**

**ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः ।**

**नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते ॥**

**नमो मण्डलदीपाय शिरोरत्नाय धूर्जटेः ।**

**कलाभिर्वर्धमानाय नमश्चन्द्राय चारवे ॥**

इति चन्द्रायार्घ्यं दद्यात् । ततः श्रीकृष्णायार्घ्यं निवेदयेत् ।

## श्रीकृष्णार्घ्यम्

**ॐ जातः कंसवधार्थाय भूभारोत्तारणाय च ।**

**पाण्डवानां हितार्थाय धर्मसंस्थापनाय च ॥**

**कौरवाणां विनाशाय दैत्यानां निधनाय च ।**

**गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ॥**

सपरिवाराय श्रीकृष्णाय नमः । अर्घ्यं निवेदयामि ।

## इत्यर्घ्यं दत्त्वा प्रार्थयेत्

**ॐ त्राहि मां सर्वलोकेश हरे संसारसागरात् ।**

**त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो ॥**

**सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे ।**

**त्राहि मां देव देवेश त्वत्तो नान्योऽस्ति रक्षिता ॥**

**यद्वा क्वचन कौमारे यौवने यच्च वार्धके ।**

**तत्पुण्यं वृद्धिमायातु पापं दह हलायुध ॥**

ततः स्तोत्रं पठन् कथाश्रवणादिना जागरणं कुर्यात् । प्रातः काले स्नानादिकं कृत्वा पूर्ववदेव पूजयित्वा पूर्णपात्रदानं गोदानं च कृत्वा ब्राह्मणेभ्यो दक्षिणां दत्त्वा सुवर्णं धेनुं च दत्त्वा तान् भोजयेत् ब्राह्मणाज्ञया स्वयं च भुञ्जीत ।

*॥ इति जन्माष्टमीपूजा ॥*

**शब्दार्थाः**

| | | |
|---|---|---|
| सर्वदेवपूजोपयोगिपुरुषसूक्तम् | = | देवताहरूको पूजा गर्दा "ॐ सहस्रशीर्षा०" मन्त्रहरूले गर्न सकिने पुरुषसूक्तमा जम्मा १६ मन्त्रहरू हुन्छन् र यिनै मन्त्रहरूले आवाहनादि क्रमले सबै देवताको पूजा गर्न सकिने हुनाले सर्वोपयोगी मानिएको |
| व्रती | = | व्रत लिएको व्यक्ति |
| निशीथासन्नप्राक्कालः | = | मध्यरात्रि हुनुभन्दा केही समय अगाडि |
| वाससी | = | दुईओटा कपडा, धोती आदि तल लगाई उत्तरीय वस्त्रसहित चोखो कपडा पहिरिएको, एक जोडी |
| प्राणप्रतिष्ठा | = | नयाँ बनाएको मूर्तिमा देवताहरूको प्राण आदि आधान गरी ल्याउने कार्य |
| मधुपर्कम् | = | दही, मह र घिउ मिलाइएको पूजाको एक वस्तु । |
| अङ्गपूजा | = | हाम्रा शरीरका विभिन्न अङ्गहरू जस्तै भगवान्का पनि अङ्गप्रत्यङ्गहरू सम्झिएर क्रमशः पूजा गर्ने विधि |
| करोद्वर्तनम् | = | सुगन्धित पदार्थहरूले बनाएको वासनादार वस्तु |

| | |
|---|---|
| ब्राह्मणानुज्ञया | = ब्राह्मणहरूका आज्ञाले |
| षोडशोपचाराः | = आवाहन, आसन, पाद्यार्घ्य, आचमन, मधुपर्क, पञ्चामृत, शुद्धोदकस्नान, शुद्धजल, वस्त्राभरण, यज्ञोपवीत, गन्ध, पुष्प, धूप, दीप, नैवेद्य, ताम्बूल, दक्षिणा, परिक्रमा, वन्दना । १६ उपचारहरूले भगवान्को पूजा गर्ने प्रक्रिया |

## अभ्यासार्थाः प्रश्नाः

१. **पुरुषसूक्तस्य प्रथमो मन्त्रः कः ?**

२. **श्रीकृष्णस्य जन्म कस्मिन् काले अभवत् ?**

३. **श्रीकृष्णस्य मातुः नाम किमस्ति ?**

४. **मधुपर्के के के पदार्थाः मिश्रिताः भवन्ति ?**

५. **पञ्चामृतसमर्पणमन्त्रं लिखत ?**

६. **अङ्गपूजास्वरूपं प्रदर्शयत ।**

७. **श्रीकृष्णस्यार्घ्यदानमन्त्रं लिखत ।**

८. **श्रीकृष्णपूजायां केषां केषां देवानां पूजा भवति ?**

९. **चन्द्रपूजनमन्त्रं लिखत ।**

१०. **षोडशोपचारान् लिखत ।**

११. **श्रीकृष्णस्य पूजायाः महत्त्वं प्रदर्शयत ।**

१२. **अधः प्रदत्तान् शब्दान् प्रयुज्य वाक्यानि रचयत**

(क) व्रती (ख) देवकी (ग) तिलयवान् (घ) प्राक् (ङ) वाससी

१३. **पाठानुसारवाक्यांशेन रिक्तस्थानं पूरयत**

पापं दह हलायुध, तुभ्यं सोमाय वै नमः । श्रीकृष्णं बालकं ध्यायेत्, योगेश्वराय देवाय, धर्मसंस्थापनाय च ।

(क) ॐ पर्यङ्कस्थां किन्नराद्यैर्युतां ध्यायेत्तु देवकीम् ।

..................... पर्यङ्के स्तनपायिनम् ॥

(ख) ॐ ..................... योगिनां पतये विभो ।

(ग) जातः कंसवधार्थाय भूभारोत्तारणाय च ।
देवानां च हितार्थाय ..................... ॥

(घ) सोमेश्वराय सोमाय तथा सोमोद्भवाय च ।
सोमस्य पतये नित्यं ..................... ॥

(ङ) यद्वा क्वचन कौमारे यौवने यच्च वार्धके ।
तत्पुण्यं वृद्धिमायातु ..................... ॥

**१४. परस्परं मेलयत**

| | |
|---|---|
| श्रीकृष्णस्य माता | वासुदेवः |
| वसुदेवपुत्रः | पादौ पूजयामि |
| गोविन्दाय नमः | देवकी |
| हरये नमः | नन्दपत्नी |
| श्रीकृष्णाय नमः | सर्वाङ्गं पूजयामि |
| यशोदा | शिरः पूजयामि |
| | रोहिणी |

## प्रयोगाभ्यासः

१. कदलीफलगर्भे द्रव्यं निधाय श्रीकृष्णजन्मभावं परिकल्पयत ।

२. एकवामनवटुं कृष्णं मत्वा छात्रछात्राः कृष्णपूजां कुर्युः ।

३. छात्रां देवकीं मत्वा देवक्यङ्कगतकृष्णं कल्पयित्वा ध्यानमन्त्रान् कण्ठस्थयत ।

४. पर्यायेण अर्घ्यदानमन्त्रान् क्षमापनमन्त्रान् च पठेयुः ।

५. रात्रौ जागरणं कृत्वा श्रीकृष्णकीर्तनं कुरुत ।

तृतीयः पाठः

# हरितालिकापूजाविधिः

## महत्त्वम्

हरितालिकाव्रतं भाद्रशुक्लतृतीयायां क्रियते । अस्य व्रतस्य कर्ता नारी नरो वा भवितुं शक्नोति । आत्मोन्नतये शिवसायुज्यप्राप्तये परिवाराणां कल्याणार्थं धनधान्यादिवृद्धये वा काम्यरूपेण च व्रतमिदं कर्तुं शक्यते । अस्य व्रतस्य उमामहेश्वरौ प्रधानदेवौ स्तः । वायनदानं पारणाविधानम् अगस्त्यलोपामुद्रयोः पूजनपूर्वकमर्घ्यदानादीनि अस्मिन्व्रते विशेषकर्माणि भवन्ति ।

## पूजाविधिः

व्रतदिने (भाद्रशुक्लतृतीयायाम्) प्रातः काले दन्तधावनपूर्वकं तिलामलककल्केन तीर्थादौ (सम्भवे सति) गत्वा स्नात्वा पट्टवस्त्रं परिधाय पूर्वनिर्मिते कदलीस्तम्भध्वजतोरणादिभिर्मण्डपे पूजास्थानमागत्य आसन उपविश्य आचम्य कर्मपात्रं कृत्वा प्रतिज्ञासङ्कल्पं कुर्यात् ।

हरिः ॐ तत्सत् ३ अद्येहेत्यादि (संवत्सरतिथिपक्षमासादीन् संयोज्य) .... मम इह जन्मनि जन्मान्तरे वा सकलार्जितपापक्षयपूर्वकं सदभीष्टकामनासिद्धयेऽनेकजन्मपर्यन्तमखण्ड-सौभाग्यत्वाभिवृद्ध्यर्थं पुत्रपौत्रधनधान्यादिप्राप्त्यर्थं पतिपुत्रादिसहितसमस्तपरिवाराणां दीर्घायुष्यप्राप्त्यर्थं श्रीउमामहेश्वरप्रीत्यर्थं च हरितालिकाव्रतमहं करिष्ये । इति सङ्कल्पं कृत्वा व्रतं चरेत् ।

ततः पूर्वोत्तराभिमुखो वा भूत्वा पाद्यार्घ्याचमनीयस्नानपञ्चामृतादीनि सम्पाद्य दीपकलशगणेशपूजनं च विधाय शिवलिङ्गे उमामहेश्वरयोः प्राणप्रतिष्ठादिक्रमेण यथामिलितोपचारैः पूजयेत् ।

ॐ अद्येहेत्यादिपूर्वसङ्कल्पसिद्धिरस्तु..... गोत्रा नामाहं सकलपापक्षयपूर्वकं मम जन्मनि सञ्चितान्यनेकमहापातकोपपातकनिरसनपूर्वकमस्मिँल्लोके समस्तश्रियाभिजुष्टनानाविधैश्वर्यसुखप्राप्तये स्वर्णविमानाधिरोहणोर्वश्यादिदेवाङ्गनाभिः सह नन्दनवनोद्यानविहरणाद्यनेकविधस्वर्गीयभोगकामस्तदुत्तरशिवसायुज्यप्राप्तये च यथामिलितोपचारैः उमामहेश्वरपूजनं करिष्ये ।

ततोऽर्घ्यस्थापनं कृत्वा गन्धाक्षतपुष्पादिभिः पाद्यादिभिरुपचारैः बालुकामये शिवलिङ्गे उमासहितं महेश्वरम् आवाहनादिक्रमेण पूजयेत् ।

## अथ प्रधानदेवताउमामहेश्वरपूजाविधिः

**प्राणप्रतिष्ठा**

बालुकामयीप्रतिमां कुशेन संस्पृशन् **ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं श्रीउमामहेश्वरयोः प्राणा इह प्राणाः। ॐ आं ह्रीं क्रौं ... श्रीउमामहेश्वरयोः जीव इह स्थितः। ॐ आं ह्रीं क्रौं ... श्रीउमामहेश्वरयोः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहागत्य यथासुखं चिरं तिष्ठन्तु स्वाहा।**

**ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳसमिमं दधातु। विश्वे देवासऽइह मादयन्तामो३म्प्रतिष्ठ॥**

ध्यानम्

**ॐ नमः शिवाभ्यां नवयौवनाभ्यां परस्पराश्लिष्टवपुर्धराभ्याम्।**

**नगेन्द्रकन्यावृषकेतनाभ्यां नमो नमः शङ्करपार्वतीभ्याम्॥**

ॐ उमामहेश्वराभ्यां नमः। ध्यायामि।

आवाहनम्

**ॐ देवदेव समागच्छ प्रार्थयेऽहं जगन्मय।**

**इमां मया कृतां पूजां गृहाण सुरसत्तम॥**

ॐ उमामहेश्वराभ्यां नमः। आवाहयामि।

आसनम्

**ॐ हर शम्भो महादेव विश्वेशामरवल्लभ।**

**अनेकरत्नसंयुक्तमासनं प्रतिगृह्यताम्॥**

ॐ उमामहेश्वराभ्यां नमः। आसनं समर्पयामि।

पाद्यम्

**ॐ जलं सुशीतलं चारु नानागन्धसमन्वितम्।**

**पाद्यं गृहाण देवेश महादेव नमोऽस्तु ते॥**

ॐ उमामहेश्वराभ्यां नमः। पाद्यं समर्पयामि।

अर्घ्यम्

**ॐ श्रीपार्वति महाभागे शङ्करप्रियवादिनि ।**

**अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते ॥**

ॐ उमामहेश्वराभ्यां नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् ।**

**आचम्यतां महाभाग उमया सहितोऽनघ ॥**

ॐ उमामहेश्वराभ्यां नमः । आचमनीयं समर्पयामि ।

स्नानम्

**ॐ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।**

**स्नापितोऽसि मया देव ततः शान्तिं कुरुष्व मे ॥**

ॐ उमामहेश्वराभ्यां नमः । स्नानं समर्पयामि ।

पञ्चामृतम्

**ॐ पयोदधिघृतं चैव शर्करामधुसंयुतम् ।**

**पञ्चामृतेन स्नपनं प्रीत्यर्थं प्रतिगृह्यताम् ॥**

ॐ उमामहेश्वराभ्यां नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ किरणाधूतपापा च पुण्यतोया सरस्वती ।**

**मणिकर्णीजलं शुद्धं स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ उमामहेश्वराभ्यां नमः । शुद्धोदकस्नानं समर्पयामि ।

वस्त्रयुग्मम्

**ॐ सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।**

**मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥**

ॐ उमामहेश्वराभ्यां नमः । वस्त्रे समर्पयामि ।

यज्ञोपवीतम्

**सुवर्णतन्तुग्रथितं कार्तस्वरविभूषितम् ।**

**यज्ञोपवीतं देवेश गृहाण जगदीश्वर ॥**

उमामहेश्वराभ्यां नमः । यज्ञोपवीतं समर्पयामि । ततः आचमनीयं जलं समर्पयेत् ।

गन्धः

**ॐ कुङ्कुमागरुकस्तूरीचन्दनं घनमिश्रितम् ।**

**विलेपनं महादेव गन्धं दास्यामि भक्तितः ॥**

ॐ उमामहेश्वराभ्यां नमः । गन्धं समर्पयामि ।

अक्षताः

**ॐ रञ्जिताः कुङ्कुमौघेन अक्षताश्चातिशोभनाः ।**

**भक्त्या समर्पितास्तुभ्यं प्रसन्नो भव शङ्कर ॥**

ॐ उमामहेश्वराभ्यां नमः । अक्षतान् समर्पयामि ।

अथ उमायै कञ्चुक्यादिसौभाग्यद्रव्याणि समर्पयेत्

**ॐ कञ्चुकीमुपवस्त्रं च नानारत्नैः समन्वितम् ।**

**गृहाण त्वं मया दत्तं पार्वती च नमोऽस्तु ते ॥**

**ॐ हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलान्वितम् ।**

**सौभाग्यद्रव्यसंयुक्तं गृहाण जगदीश्वरि ॥**

ॐ उमायै नमः । कञ्चुक्यादिसौभाग्यद्रव्याणि समर्पयामि ।

पुष्पाणि बिल्वपत्राणि भस्मधत्तूरपुष्पमाल्यादीनि च समर्पयेत्

**ॐ सेवन्तिकाबकुलचंपकपाटलाब्जैः पुन्नागजातिकरवीररसालद्रोणैः ।**

**बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥**

ॐ उमामहेश्वराभ्यां नमः । पुष्पाणि समर्पयामि ।

अङ्गपूजा

ॐ शङ्कराय नमः पादौ पूजयामि । ॐ महेश्वराय नमः जङ्घे पूजयामि । ॐ शम्भवे नमः जानुनी पूजयामि । ॐ भूतेशाय नमः ऊरू पूजयामि । ॐ नीललोहिताय नमः कटिं

पूजयामि । ॐ उग्राय नमः नाभिं पूजयामि । ॐ कृशानुरेतसे नमः उदरं पूजयामि । ॐ हराय नमः स्तनौ पूजयामि । ॐ नीलकण्ठाय नमः कण्ठं पूजयामि । ॐ शिवाय नमः मुखं पूजयामि । ॐ त्रिनेत्राय नमः नेत्रे पूजयामि । ॐ रुद्राय नमः कर्णौ पूजयामि । ॐ ललाटाक्षाय नमः ललाटं पूजयामि । ॐ शर्वाय नमः शिरः पूजयामि । ॐ शम्भवे नमः सर्वाङ्गं पूजयामि ।

धूपः

**ॐ वनस्पतिरसोद्भूतः कृष्णागरुसमन्वितः ।**

**आनीतोऽयं मया धूपो गृहाण परमेश्वर ॥**

ॐ उमामहेश्वराभ्यां नमः । धूपं समर्पयामि ।

दीपः

**ॐ त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमः ।**

**आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यताम् ॥**

ॐ उमामहेश्वराभ्यां नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥**

ॐ उमामहेश्वराभ्यां नमः । नैवेद्यं समर्पयामि ।

आचमनीयम्

**ॐ मलयाचलसम्भूतं कर्पूरेण समन्वितम् ।**

**आचम्यतां जलं स्वच्छं प्रसन्नो भव सर्वदा ॥**

ॐ उमामहेश्वराभ्यां नमः । आचमनीयं समर्पयामि ।

ॐ करोद्वर्तनकं च समर्पयामि । ॐ उमामहेश्वराभ्यां नमः ।

फलम्

**ॐ इदं फलं मया देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ॐ उमामहेश्वराभ्यां नमः । फलं समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्** ।

**एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृहचताम्** ॥

ॐ उमामहेश्वराभ्यां नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः** ।

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे** ॥

ॐ उमामहेश्वराभ्यां नमः । दक्षिणां समर्पयामि ।

आभूषणम्

**ॐ वज्रमाणिक्यवैदूर्यमुक्ताबिन्दुसमन्वितम्** ।

**पुष्परागसमायुक्तं भूषणं प्रतिगृह्यताम्** ॥

ॐ उमामहेश्वराभ्यां नमः । आभूषणं समर्पयामि ।

नामपूजा

ॐ उमायै नमः । ॐ गौर्यै नमः । ॐ पार्वत्यै नमः । ॐ जगद्धात्र्यै नमः । ॐ जगत्प्रतिष्ठायै नमः । ॐ शान्तिरूपिण्यै नमः । ॐ हराय नमः । ॐ महेश्वराय नमः । ॐ शम्भवे नमः । ॐ शूलपाणये नमः । ॐ पिनाकधृषे नमः । ॐ शिवाय नमः । ॐ पशुपतये नमः । ॐ महादेवाय नमः ।

नीराजनम्

**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च** ।

**त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम्** ॥

ॐ उमामहेश्वराभ्यां नमः । नीराजनं समर्पयामि ।

पुष्पाञ्जलिः

**ॐ मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय** ।

**दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय** ॥

ॐ उमामहेश्वराभ्यां नमः । मन्त्रपुष्पाञ्जलिं समर्पयामि ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि तानि विनश्यन्तु प्रदक्षिणपदे पदे ॥**

ॐ उमामहेश्वराभ्यां नमः । प्रदक्षिणां समर्पयामि ।

नमस्कारः

**ॐ नमः शिवाय शान्ताय पञ्चवक्त्राय शूलिने ।**

**नन्दिभृङ्गिमहाकालगणयुक्ताय शम्भवे ॥**

**शिवायै शिवरूपायै मङ्गलायै महेश्वरि ।**

**शिवसर्वार्थदे नित्यं शिवरूपे नमोऽस्तु ते ॥**

**ॐ अन्यथा शरणं नास्ति युवां हि शरणं मम ।**

**तस्मात्कारुण्यभावेन रक्षतां त्रिदशेश्वरौ ॥**

ॐ उमामहेश्वराभ्यां नमः । नमस्कारं समर्पयामि ।

प्रार्थना

**ॐ पुत्रान्देहि धनं देहि सौभाग्यं देहि सुव्रते ।**

**अन्यांश्च सर्वकामांश्च देहि देवि नमोऽस्तु ते ॥**

ॐ उमामहेश्वराभ्यां नमः । प्रार्थनां समर्पयामि ।

अर्घ्यदानम्

**ॐ पशुपते ! महादेव ! शूलपाणे ! महेश्वर ! ।**

**गृहाणार्घ्यं मया दत्तम् उमया सहित प्रभो ! ॥**

ततोऽर्धरात्रे षोडशोपचारेण पुनः पूर्ववत् पूजां कृत्वा नानाविधकौतुकनृत्यगीतकथा-श्रवणगौरीशनामकीर्तनादिभिर्जागरणं कुर्यात् । अशक्तौ तद्दिन एव विसर्जनं कर्तुमपि शक्यते । पारणा तु श्वदिने एव ।

(अपरदिने उत्तराङ्गकर्म पूजा पूर्णपात्रं दक्षिणा विसर्जनम् ।)

ततः अपरदिने प्रातः स्नानादिकं कृत्वा पूर्वदिनकृतपूजास्थानमागत्य गन्धपुष्पाक्षतधूपदीपनैवेद्यादिभिः पूर्वदिनवत् उमामहेश्वरयोः पूजां विधाय अर्घ्यं निवेदयेत् ।

**ॐ श्रीपार्वति महाभागे शङ्करप्रियवादिनि ।**

**अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते ॥**

ॐ उमामहेश्वराभ्यां नमः । अर्घ्यं निवेदयामि ।

ततो वायनानि ब्राह्मणाय दद्यात्

वायनम्

**अन्नं सुवर्णपात्रस्थं सवस्त्रफलदक्षिणाम्** ।
**वायनं गौरि विप्राय ददामि प्रीतये तव** ॥
**सौभाग्यारोग्यकामाय सर्वसम्पत्समृद्धये** ।
**गौरीगौरीशतुष्ट्यर्थं वायनं ते ददाम्यहम्** ॥ ॐ उमामहेश्वराभ्यां नमः ।

वायनदानप्रार्थना

**ॐ अन्नं सुवर्णपात्रस्थं सवस्त्रफलदक्षिणाम्** ।
**वायनं गौरि विप्राय ददामि प्रीतये तव** ॥

**पूर्णपात्रदानम्**

गन्धादिभिः सम्पूज्य कुशादीन्यादाय सङ्कल्पं कुर्यात् । ॐ अद्यहेत्यादि पूर्वसङ्कल्पसिद्धिरस्तु गोत्रोत्पन्नः/ना नाम अहं मम पूर्वदिने हरितालिकोपवासव्रताङ्गत्वेन दीपकलशगणेशपूजनपूर्वकं कृतस्य उमामहेश्वरपूजनकर्मणः साङ्गतासिद्ध्यर्थमपूर्णस्य परिपूरणार्थमिदं पूर्णपात्रं प्रजापतिदैवतम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे तत्सन्न मम ।

**दक्षिणासङ्कल्पः**

**ॐ हिरण्यगर्भे**ति सम्पूज्य कुशादीन्यादाय ॐ अद्येत्यादि पूर्वसङ्कल्प सिद्धिरस्तु गोत्रोत्पन्नः नाम शर्माऽहं पूर्वदिने हरितालिकोपवासव्रताङ्गत्वेन दीपकलशगणेशपूजनपूर्वकं कृतस्य उमामहेश्वरपूजनकर्मणः साङ्गतासिद्ध्यर्थमिमां दक्षिणां रौप्यखण्डं चन्द्रदैवतम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

विसर्जनम्

गन्धपुष्पादिकं चादाय- **ॐ यान्तु देवेति, ॐ गच्छ गच्छेति च** देवान् विसर्जयेत् ।

कर्मेश्वरार्पणम्

**ॐ कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वानुसृतेः स्वभावात्** ।
**करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत्** ॥ इति कर्मेश्वरार्पणं कुर्यात् ।

*॥ इति हरितालिकापूजा ॥*

## व्रतपारणाविधिः

हरितालिकाव्रतपारणायां प्रथमं लोपामुद्राम् अगस्तिं पूजयित्वा अर्घ्यं च दत्वा पारणां कुर्वन्ति । अतः स एव क्रमोऽत्र प्रस्तूयते

(क) लोपामुद्रापूजा । अगस्तिपूजा । अर्घ्यदानं च

हरितालिकाव्रताङ्गत्वेन उमामहेश्वरपूजां समाप्य बहिः प्राङ्गणे गोमयनिर्मितकुण्डे काशपुष्पनिर्मितमूर्तिसहिते पूर्णकुम्भे वा लोपामुद्रासहितमगस्तिं पूजयेत् । तद्यथा

अर्घ्यं संस्थाप्य तत्र यथाविधि सम्पूज्य

**ॐ अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः ।**
**उभौ वर्णावृषिरुग्रः पुपोष सत्यादेवेष्वाशिषो जगामा ॥**

इति मन्त्रेण पाद्यादिभिरुपचारैः अगस्तिं नाममन्त्रेण लोपामुद्रां च पूजयेत्। ततो धूपदीपनैवेद्यादीन् समर्प्य अर्घ्यं दद्यात् ।

अगस्त्यर्घ्यमन्त्रः

**ॐ काशपुष्पप्रतिकाश वह्निमारुतसम्भव ।**
**मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥**
**विघ्नवृद्धिक्षयकर मेघतोयविषापह ।**
**रत्नवल्लभ देवेश लङ्कावास नमोऽस्तु ते ॥**
**वाताऽपि भक्षितो येन समुद्रः शोषितः पुरा ।**
**लोपामुद्रापतिः श्रीमान् योऽसौ तस्मै नमो नमः ॥**
**तस्मै नमोऽस्त्वगस्त्याय सशिष्याय च पुत्रिणे ।**
**इदमर्घ्यं मया दत्तं प्रीत्यर्थं तव हेतवे ॥**

लोपामुद्रार्घ्यमन्त्रः

**ॐ राजपुत्रि महाभागे ऋषिपत्नि वरानने ।**
**लोपामुद्रे नमस्तुभ्यमर्घ्यं मे प्रतिगृह्यताम् ॥**

इत्यर्घ्यं दत्वा प्रणिपत्य विसर्जयेत् ।

**व्रतपाराणा**

अर्घ्यपात्रे तुलसीदलयुतं सफलं सदक्षिणां शालग्रामचरणोदकं च ताम्रपात्रे संस्थाप्य हस्ताभ्यां गृहीत्वा वक्षमाणमन्त्रान् पठेत्

**ॐ व्रतानां व्रतराजेन्द्र व्रतानां व्रतमुत्तमम् ।**

**व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं व्रतकर्मणि ॥**

**सर्वं भवतु मेऽच्छिद्रं यदि चेच्छन्ति ब्राह्मणाः ।**

**ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ॥**

**सर्वदेवमयो विप्रो न तद्वचनमन्यथा ।**

**उपवासो व्रतं चैव दानं तीर्थं जपं तपः ॥**

**विप्रैः सम्भाषितं यद्यत्तत्सर्वं सफलं भवेत् ।**

**अन्नव्यञ्जनपानेषु शय्यायां ताम्रभाजने ॥**

**यच्च भुक्तमभुक्तं वा स्वप्नान्तरमथापि वा ।**

**दन्तान्तरविलग्नं वा क्षम्यतां परमेश्वर ॥**

**सर्वं भवतु मेऽच्छिद्रं ब्राह्मणा भवतां गिरा ।**

**ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥**

**तेषां वाक्योदकेनैव शुद्धयन्ति मलिना जनाः ।**

**व्यासवाल्मीकिवचनात्पराशरवसिष्ठयोः ॥**

**गर्गगौतमधौम्यात्रिकश्यपाङ्गिरसां तथा ।**

**वचानान्नारदादीनां सम्पूर्णं भवतु व्रतम् ॥**

**अच्छिद्रं भक्ष्यभोज्येषु पर्यङ्केष्वासनेषु च ।**

**नियमेषु च सर्वेषु भवति द्विजवाक्यतः ॥**

**कृतैतन्नीराहारव्रतं विधिहीनं द्रव्यहीनं दक्षिणाहीनं च यत्कृतं तत्सुकृतमस्तु । यन्नकृतं तद्विष्णोः प्रसादाद् ब्राह्मणवचनाच्च सर्वं परिपूर्णमस्तु** इति च वदेत् । तत आचार्यः यजमानहस्तात्पात्रमादाय **ॐ अस्तु परिपूर्ण**मित्युक्त्वा

**ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।**

**दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥**

**ॐ अज्ञानतिमिरान्धस्य ज्ञानेनानेन केशव ।**

**प्रसीद सुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव ॥**

इत्यभिमन्त्र्य व्रतीहस्ते दद्यात् व्रती च फलं दक्षिणां चाचार्याय दत्वा

**ॐ अकालमृत्युहरणं सर्वव्याधिनिवारणम् ।**
**शिवपादोदकं पीत्वा पुनर्जन्म न विद्यते ॥**
इति जलं पिवेत् ।

ततः **ॐ यान्तुदेवेति** देवान् विसृज्य कर्मेश्वरार्पणं कृत्वा प्रसादग्रहणं कुर्यात् ।

*॥ इति व्रतपारणाविधिः ॥*

## शिक्षणनिर्देशनम्

हरितालिकापूजायां प्रयुक्तानां मन्त्राणां शुद्धोच्चारणाय प्रेरणां कुरुत । कक्षायां विद्यालयस्य प्राङ्गणे वा हरितालिकापूजामायोज्य प्रदर्शयत ।

## शब्दार्थाः

| | | | |
|---|---|---|---|
| तिलामलककल्केन | = तिल र अमलाको पिनाले | पट्टवस्त्रम् | = पाटको/रेसमी कपडा |
| परिधाय | = पहिरेर | अखण्डितः | = नटुटेको |
| बालुकामयम् | = बालुवाले बनाएको | कदली | = केरा |
| कज्जलम् | = गाजल | यथामिलितः | = जो मिलेको |
| व्रतपारणा | = व्रतको समाप्ति | भूषणम् | = गहना |
| ताम्बूलम्. | = पान मसला | ताम्रपात्रम् | = तामाका भाँडाकुँडा |
| अङ्गपूजा | = भगवान्का पाऊदेखि शिरसम्मका सबै अङ्गका पूजा | वायनम् | = पात्रविशेषमा राखिएको अन्न |

## अभ्यासार्थाः प्रश्नाः

१. **हरितालिकाव्रतं कदा क्रियते ?**
२. **वायनशब्दस्य कोऽर्थः ?**
३. **व्रतोत्तरदिने किं क्रियते ?**
४. **पारणादिने केषां देवानां पूजा भवति ?**
५. **लोपामुद्रायाः पतिः कः ?**

६. **हरितालिकाव्रतस्य प्राक्कर्तव्यं लिखत ।**

७. **नामपूजाया नामावली प्रदर्शनीया ।**

८. **ताम्बूलसमर्पणमन्त्रः कः ?**

९. **पूर्णपात्रस्य सङ्कल्पवाक्यस्वरूपं प्रदर्शयत ।**

१०. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

नर्मदाजलैः, पाद्यम्, गृहाण, वाससी, प्रतिगृह्यताम्, वायनम्, अङ्गपूजा, बालुकामयम्, व्रतपारणा

११. **पाठाधारेण रिक्तस्थानं पूरयत**

(क) ॐ हर ..... महादेव ...............वल्लभ ।

अनेकरत्न............. प्रति................. ॥

(ख) सुवर्णतन्तु ...... कार्तस्वर ........ ।

........... देवेश गृहाण ................. ॥

(ग) ........ सुवर्णपात्रस्थं सवस्त्रफलदक्षिणाम् ।

वायनं गौरि विप्राय ....................... ॥

## प्रयोगाभ्यासः

१. मित्रैः सह हरितालिकापूजाविधिं शुद्धतया सस्वरवाचनं कुरुत ।

२. शुद्धरूपेण पाठस्य मन्त्रान् स्तोत्रान् वा पठित्वा शिक्षकाय मित्रगणेभ्यश्च श्रावयत ।

३. कक्षायां विद्यालयस्य प्राङ्गणे वा सखिभिः सह मत्वा हरितालिकापूजां कुरुत ।

४. तव गृहे आश्रमे वा हरितालिकापूजा भवति ? भवति चेत् पूजाविधिं सङ्कलय्य कक्षायां श्रावयत ।

५. स्थानविशेषानुसारं हरितालिकापूजाविधेः एकरूपता भवति न वा ? अभिभावकैः शिक्षकैः वा सह विमर्शं कुरुत ।

चतुर्थः पाठः

# ऋषिपञ्चमीव्रतपूजाविधिः

## महत्त्वम्

अस्माकं वैदिकसंस्कृतौ प्रत्येकेषां जीवानां सृष्टिः परमात्मनः जातेति मन्यते । परमात्मनो ब्रह्मा, ब्रह्मणः नारदादयो मानसिकपुत्राः सञ्जाताः । मानसिकपुत्रेषु एव कश्यपादय अस्माकं गोत्रप्रवर्तकाः सप्तर्षयो जाताः । तेषां नामानि यथा

**ॐ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।**
**जमदग्निर्वशिष्ठश्च साध्वी चैवाप्यरुन्धती ॥**

**"सर्वाः प्रजाः काश्यपाः"** इति वचनात् सर्वेषां चराचराणां जातीनां कश्यपर्षेः जननात् सर्वेषां गोत्रं च काश्यपः । एतेषां गोत्रप्रवर्तकानाम् ऋषीणां प्रति हार्दिकीं कृतज्ञतां ज्ञापनाय नारीभिः भाद्रशुक्लपञ्चम्यां पुरुषैश्च श्रावणशुक्लपूर्णिमायां पूजनतर्पणादिकं क्रियते । मान्यजनान् प्रति समादरभावं बालान् प्रति प्रेमभावं तथा वनस्पतेः प्रार्थनापूर्वकं दन्तधावनादिना च वयं चराचरजीवानां प्रति सर्वदा मित्रभावं कामयामहे । इयं वैदिकसंस्कृतेर्विशेषता । अतस्तेषां पूजनं स्मरणं च विशेषपर्वणि विशेषेण कर्तव्यम् ।

**पूजाविधिः**

व्रतिनो समीपवर्तिगङ्गादिनद्यादौ तडागे वा गत्वा ३६५ अपामार्गकाष्ठेन वनस्पतिप्रार्थनापूर्वकं दन्तधावनं कुर्युः ।

वनस्पतिप्रार्थनामन्त्रः

**ॐ आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ।**
**ब्रह्म प्रज्ञां च मेघां च त्वन्नो देहि वनस्पते ! ॥**

दन्तधावनमन्त्रः

**ॐ मुखदौर्गन्ध्यनाशाय दन्तानां च विशुद्धये ।**
**ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् ॥**

एवं विधिना दन्तधावनं विधाय ३६५ वारमाशरीरम् मृत्तिकां संलेप्य ३६५ अपामार्गपत्रैरभिषिच्य स्नानं कुर्यात् । सम्पादितपूजासामग्री व्रती पञ्चगव्यप्राशनमाचमनञ्च कृत्वा कर्मपात्रं निर्माय प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

पूर्वसङ्कल्पसिद्धिरस्तु ..... नाम्नी देवी अहं मम श्रुतिस्मृतिपुराणोक्त-समस्तफल-प्राप्त्यर्थं ज्ञानतोऽज्ञानतो वा रजस्वलावस्थायां कृतास्पृश्य-पदार्थस्पर्शस्तथा सम्पर्कजनितदोषपरिहारार्थम् अरुन्धतीसहितकश्यपादिसप्तर्षिप्रीतिद्वारा तद्दोषशमनार्थं श्रीपरमेश्वरप्रीत्यर्थं सप्तर्षिपूजनमहं करिष्ये । तदङ्गत्वेन दीपकलशगणेशादिपूजनपूर्वकं ब्राह्मणवरणपुण्याहवाचनं चाहं करिष्ये ।

इति सङ्कल्प्य पूजां विधाय प्रधानदेवं सम्पूज्य व्रतं चरेत् ।

तत्र ताम्रपात्रे तण्डुलान् संस्थाप्य अरुन्धतीसहितकश्यपादिसप्तर्षीन् सूत्रेण संवेष्ट्य पूजनं कर्तव्यम् ।

**पूजासामग्री**

अपामार्गका दतिवन ३६५, अपामार्गको पात ३६५, चोखो माटो, कुश, काँसको फूल, सेतो कपडा, सौभाग्य सामग्री, नजोतेको ठाउँको अन्न सामा आदि, साग, काँचो धागो, पूजासामग्री २ भाग, फलफूल, माला आदि ।

**अथ ऋषिपञ्चमीपूजाविधिः**

अरुन्धतीसहितकश्यपादिसप्तर्षिपूजनम्

ताम्रपात्रे तन्डुलान् प्रक्षिप्य तत्र कुशनिर्मितान् अरुन्धतीसहितान् कश्यपादिसप्तर्षीन् संस्थाप्य सूत्रेण परिवेष्टच यथाविधि पूजनम् ।

**ॐ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।**

**जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुन्धती ॥**

इत्येतान् अरुन्धत्या सहितान् कश्यपादीन्सप्तर्षीन् यथाक्रमेणावाह्य पूजयेत् ।

आवाहनम्

**ॐ आगच्छन्तु महाभागाश्चतुर्वेदस्वरूपिणः ।**

**यावत्पूजामहं कुर्वे तावद् भवन्तु सुस्थिराः ॥**

ॐ कश्यपाय नमः कश्यपमावाहयामि । ॐ अत्रये नमः अत्रिमावाहयामि । ॐ भरद्वाजाय नमः भरद्वाजमावाहयामि । ॐ विश्वामित्राय नमः विश्वामित्रमावाहयामि । ॐ गौतमाय नमः गौतममावाहयामि । ॐ जमदग्नये नमः जगदग्निमावाहयामि । ॐ वसिष्ठाय नमः वसिष्ठमावाहयामि । ॐ अरुन्धत्यै नमः अरुन्धतीमावाहयामि । इति क्रमेणावाह्य

ध्यानम्

**ॐ मूर्तिर्ब्रह्मण्यदेवस्य ब्रह्मणस्तेज उत्तमम् ।**

**भानुकोटिप्रतीकाशमृषिवृन्दं विचिन्तये ॥**

आसनम्

**ॐ ऋग्यजुः सामवेदानां स्वरूपेभ्यो नमो नमः ।**

**पुराणपुरुषेभ्यो हि देवर्षिभ्यो नमो नमः ॥**

**ॐ कुशासने पवित्रेऽस्मिन् तिष्ठन्तु मुनिसत्तमाः ।**

**अरुन्धत्या समेतास्ते जटामुकुटधारिणः ॥**

पाद्यम्

**ॐ गन्धपुष्पाक्षतैर्युक्तं पाद्यं गृह्णन्तु भो द्विजाः ।**

**प्रसादं कुरुत प्रीताः प्रणतस्य सदा मम ॥**

अर्घ्यम्

**ॐ नभस्ये शुक्लपञ्चम्यामर्चिता ऋषिसत्तमाः ।**

**पापं दहन्तु मे सर्वं गृह्णन्त्वर्घ्यं नमो नमः ॥**

आचमनम्

**ॐ लोकानां तुष्टिकर्तारो यूयं सर्वे तपोधनाः ।**

**नमो वो धर्मविज्ञेभ्यो गृह्णीताचमनं त्विदम् ॥**

पञ्चामृतम्

**ॐ पयोदधिघृतं चैव शर्करामधुसंयुतम् ।**

**पञ्चामृतेन स्नपनं करिष्ये ऋषिसत्तमाः ॥**

स्नानम्

**ॐ मन्दाकिन्याः समानीतं यमुनागौतमीजलम् ।**

**कृष्णा च नर्मदा तापी ताभ्यः स्नानार्थमर्पितम् ॥**

वस्त्रम्

**ॐ यूयं सर्वे तपोनिष्ठा ब्रह्मज्ञाः सत्यवादिनः ।**

**वस्त्राणि प्रतिगृह्णन्तु मुक्तिदाः सन्तु मे सदा ॥**

यज्ञोपवीतम्

**ॐ नानामन्त्रैः समुद्भूतं त्रिवृतं ब्रह्मसूत्रकम् ।**

**प्रत्येकं च प्रयच्छामि ऋषयः प्रतिगृह्यताम् ॥**

गन्धः

**ॐ कुङ्कुमागरुकर्पूरसुगन्धैर्मिश्रितं शुभम् ।**

**गन्धाढ्यं चन्दनं दिव्यं गृह्णन्तु ऋषिसत्तमाः ॥**

अक्षताः

**ॐ रञ्जिताः कुङ्कुमौघेन अक्षतास्तु सुशोभनाः ।**

**गृह्णन्तु मम सन्तुष्टा भवन्तु मुनिसत्तमाः ॥**

अरुन्धत्यै सिन्दूरादिसौभाग्यद्रव्यम्

**ॐ कण्ठसूत्रं ताडपत्रं हरिद्रा कुङ्कुमाञ्जनम् ।**

**सिन्दूरालक्तकं दास्ये सौभाग्यद्रव्यमीश्वरि ॥**

पुष्पाणि

**ॐ मालतीचम्पकादीनि नानापुष्पाणि वै द्विजाः ।**

**मया हृतानि पूजार्थं गृह्णन्तु मुनिपुङ्गवाः ॥**

धूपः

**ॐ वनस्पतिरसोद्भूतो गन्धाढ्यः सुमनोहरः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

दीपः

**ॐ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**

**गृह्णन्तु ऋषयः सर्वे दीपोऽयं तिमिरापहः ॥**

नैवेद्यम्

**ॐ नानापक्वान्नसंयुक्तं रसैः षड्भिः समन्वितम् ।**

**गृह्णन्तु ऋषयः सर्वे नैवेद्यं सुमनोहरम् ॥**

नैवेद्यान्ते पानीयम् । उत्तरापोशनं हस्तप्रक्षालनं करोद्वर्तनं च

ॐ सप्तर्षिभ्यो नमः इति मन्त्रेण देयम् ।

फलम्

**ॐ नमो वेदविदां श्रेष्ठा ऋषयः सूर्यसन्निभाः ।**

**गृह्णन्त्विदं फलं तुष्टा मया दत्तं हि भक्तितः ॥**

पूगीफलं ताम्बूलं च

**ॐ सप्तर्षिभ्यो नमः** इति मन्त्रेण समर्पयेत् ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

प्रदक्षिणा

चरणोत्थापनं विना (चरणौ भूमिसंलग्नौ यथा स्यात् तथा) सप्तर्षिप्रदक्षिणा

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि तानि विनश्यन्तु प्रदक्षिण पदे पदे ॥**

नीराजनम्

**ॐ चक्षुर्वै सर्वलोकानां तिमिरस्य निवारणम् ।**

**जमदग्निर्वसिष्ठश्च गृह्णन्तु ऋषिसत्तमाः ॥**

पुष्पाञ्जलिः

**ॐ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।**

**जमदग्निर्वसिष्ठश्च गृह्णन्तु कुसुमाञ्जलिम् ॥**

नमस्कारः

**ॐ नमोस्तु ऋषिवृन्देभ्यो देवर्षिभ्यो नमो नमः ।**

**सर्वपापहरेभ्यो हि वेदविद्भ्यो नमो नमः ॥**

प्रार्थना

**ॐ एते सप्तर्षयः सर्वे भक्त्या सम्पूजिता मया ।**

**सर्वपापं व्यपोहन्तु ज्ञानतोऽज्ञानतः कृतम् ॥**

क्षमापनम्

**ॐ न्यूनातिरिक्तकर्माणि मया यानि कृतानि हि ।**

**क्षमध्वं तानि सर्वाणि यूयं सर्वे तपोधनाः ॥**

अर्घ्यनिवेनदम्

**ॐ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।**

**जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः ॥**

**गृह्णन्त्वर्घ्यं मया दत्तं तुष्टा भवन्तु मे सदा ।**

अथ वायनम्

**ॐ वायनं फलसंयुक्तं सघृतं दक्षिणान्वितम् ।**

**द्विजवर्याय दास्यामि व्रतसम्पूर्तिहेतवे ॥**

**ऋषयः प्रतिगृह्णन्तु तेजोरूपास्तपोधनाः ।**

**उभयोस्तारकाः सन्तु वायनस्य प्रदानतः ॥**

ततो ब्राह्मणेभ्यो दक्षिणां दद्यात् ।

**विसर्जनम्**

तत आवाहितदेवेभ्यः पुष्पाक्षतादिभिरभ्यर्च्य **'ॐ यान्तु देवेति, ॐ गच्छ गच्छेति'** च विसृज्य **कायेन वाचा...** इति कर्मेश्वरार्पणं कुर्यात् । ततः कथां श्रुत्वा प्रसादादिकं गृहीत्वा अकृष्टभूम्युत्पन्नैः शाकैः श्यामाकैर्नीवारैर्वाऽहारं प्रकल्प्य ऋषिध्यानपरा भवेयुः ।

*॥ इति ऋषिपञ्चमीपूजा समाप्ता ॥*

## शब्दार्थाः

| | |
|---|---|
| तडाग | = तलाउ |
| ष्ठीवनाय | = शुद्धिका लागि |
| अरुन्धती | = वसिष्ठ ऋषिकी पत्नी |
| चरणोत्थापनं विना | = चरण (खुट्टा) नउठाईकन |
| भूमिसंलग्नम् | = भुइँमा छोएर, स्पर्श गरेर |
| मानसिकपुत्राः | = मनले सङ्कल्प गर्दा जन्मिएका ब्रह्माजीका छोरा, नारदहरू |
| कर्मेश्वरार्पणम् | = गरेका पूजादि कर्म ईश्वरमा अर्पण गर्ने कार्य |
| अकृष्टभूम्युत्पन्नमन्नम् | = नजोती नखनी भूमिमा आफैं उम्रिएको धान, सामा, साग आदि |
| ऋषिध्यानपराः | = मन, वचन, कर्म सबै ऋषिमा लगाउने कार्य, ध्यानमग्न भएर |

## अभ्यासार्थाः प्रश्नाः

१. **जीवानां सृष्टिः कुतो जाता ?**

२. **ऋषिपञ्चमीव्रतदिने केन काष्ठेन कति संङ्ख्यया दन्तधावनं क्रियते ?**

३. **ऋषिपञ्चमीव्रतस्य कर्ता कः ?**

४. **तत्र कथं परिक्रमाः क्रियन्ते ?**

५. **अरुन्धती कस्य ऋषेः पत्नी ?**

६. **ऋषिपञ्चमीव्रते दन्तधावनविधिं प्रदर्शयत ।**

**७. सप्तर्षिणां नामानि लिखत ।**

**८. सप्तर्षिणां मन्त्रपूर्वकमावाहनप्रकारं प्रदर्शयत ।**

**९. दक्षिणादानस्य सङ्कल्पवाक्यप्रकारं रचयत ।**

**१०. अधस्तान् शब्दान् प्रयुज्य वाक्यानि रचयत**

कश्यपः, आसनम्, पुष्पाणि, प्रदक्षिणा, अकृष्टान्नम्

**११. पाठाधारेण रिक्तस्थानं पूरयत**

(क) कश्यपोऽत्रिभरद्वाजो .................... ।

जमदग्निर्वसिष्ठश्च .................... ॥

(ख) .................... प्रजापशुवसूनि च ।

ब्रह्म प्रज्ञां च मेधां च ................ ॥

(ग) मुखदौर्गन्ध्यनाशाय .................... ।

.................... कुर्वेऽहं दतधावनम् ॥

## प्रयोगाभ्यासः

१. मित्रैः सह सप्तर्षीणां नामप्रयुक्तश्लोकं वनस्पतिप्रार्थनाश्लोकं तथा दन्तधावनश्लोकं च कण्ठस्थं कुरुत ।

२. अस्य पाठस्य मन्त्रान् पठित्वा शिक्षकाय मित्रगणेभ्यश्च श्रावयत ।

३. परस्परं सप्तर्षिस्वरूपान् परिकल्पयत ।

४. चरणोत्थापनं विना प्रदक्षिणाप्रकारं प्रदर्शयत ।

५. कुशद्वारा सप्तर्षिप्रतिमानिर्माणे एकरूपताऽस्ति न वा ? शिक्षकसहायेन परस्परं अभ्यासं कुरुत ।

पञ्चमः पाठः

# महालक्ष्मीव्रतपूजाविधिः

## महत्त्वम्

भाद्रशुक्लाष्टम्यां महालक्ष्म्याः पूजनारम्भो भवति । तत आरभ्य आश्विनकृष्णाष्टमीपर्यन्तं षोडशदिनानि यावत् सम्पूज्य व्रतं समाप्यते । प्रतिदिनं पूजनमुपवासश्च क्रियते । व्रतोपवासेन ऐहिकं पारलौकिकं च सुखं प्राप्यते । ऐहिकसुखेषु धनधान्यपशुसुवर्णरजतादीनि वस्तूनि प्राप्यन्ते । पारलौकिकसुखेषु मानवजीवनस्य परमपदार्थो मोक्षः, तमेव प्राप्तुं शक्यते । यं प्राप्य मानवः पुनः संसारेऽस्मिन् नावर्तते । मानवजीवने महालक्ष्मीव्रतस्यातीव महत्त्वमस्ति ।

## पूजाविधिः

व्रतपूर्वदिने (भाद्रशुक्लसप्तम्याम्) एककालभोजनं कृत्वा व्रतायोपवासेन तिष्ठेत् । भाद्रशुक्लाष्टम्यां प्रातः नित्यक्रियां समाप्य मण्डपं पूजासामग्रीं च सम्पाद्य कर्मपात्रनिर्माणपूर्वकं प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

## प्रतिज्ञासङ्कल्पस्वरूपम्

देशकालादीन् सङ्कीर्त्य ... गोत्रोत्पन्नो मातृपितृपत्नीपुत्रपुत्र्यादिसहितोऽहम् मम श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं सकलपापक्षयपूर्वकं श्रीमहालक्ष्मीप्रीतिद्वारा सकल-विघ्नबाधारोगशोकभयनिवारणपूर्वकं पुत्रपौत्र्यादिधनधान्याभिवृद्ध्यर्थं श्रीमहालक्ष्मीप्रीतयेऽद्यदिनादारभ्य षोडशवर्षपर्यन्तं महालक्ष्मीव्रताचरणमहं करिष्ये । (द्वितीयादिवर्षेषु पूर्वसङ्कल्पितकामनासिद्धये महालक्ष्म्या व्रतस्य द्वितीयवर्षे । तृतीयवर्षे पूर्ववत् व्रताचरणमहं करिष्ये इति योजयेत् ।)

दीपकलशगणेशादिदेवानां पूजनं विधाय प्रधानत्वेन महालक्ष्म्याः पूजनं कुर्यात् । मन्त्राभावे महालक्ष्म्यै नमः आसनं समर्पयामि । महालक्ष्म्यै नमः पाद्यं समर्पयामि एवं रीत्या नाममन्त्रेणापि पूजनं कर्तुं शक्यते ।

## पूजासामग्री

१६ खालका फूलहरू, १६ खालका नैवेद्य, गुड (सक्खर), धनिया, पानी भएको नरिवल, सेतो अक्षता, फलहरू, नैवेद्य, फूलमाला, दुबो आदि ।

**अथ महालक्ष्मीपूजाविधिः**

प्राणप्रतिष्ठादिकं कृत्वा ध्यायेत् ।

ध्यानम्

**ॐ महादेवि महालक्ष्मि नमस्ते सुरपूजिते ।**
**शक्तिदायि महालक्ष्मि नमस्ते दुःखभञ्जनि ॥**
**श्रेयःप्राप्तिनिमित्ताय महालक्ष्मीं नमाम्यहम् ।**
**पतितोद्धारिणि देवि नमाम्यहं पुनः पुनः ॥**
**वेदास्त्वां संस्तुवन्ति हि शास्त्राणि च मुहुर्मुहुः ।**
**देवास्त्वां प्रणमन्ति हि लक्ष्मीदेवि नमोऽस्तु ते ॥**
**नमस्ते श्रीमहालक्ष्मि नमस्ते भवभञ्जनि ।**
**भुक्तिर्मुक्तिर्न लभ्येत देवि यस्याः कृपां विना ॥**
**सुखं सौभाग्यं नाप्नोति यत्र लक्ष्मीर्न विद्यते ।**
**तत्फलं न समाप्नोति महालक्ष्मीं नमाम्यहम् ॥**
**देहि सौभाग्यमारोग्यं देहि मे परमं सुखम् ।**
**नमस्ते आद्यशक्तिस्त्वं नमस्ते भवभञ्जनि ॥**
**विधेहि देवि कल्याणं विधेहि परमां श्रियम् ।**
**विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ॥**
**अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ।**
**नमस्तेऽस्तु महामाये सर्वसुखप्रदायिनि ॥**
**नमाम्यहं महालक्ष्मीं नमस्ते परमेश्वरीम् ।**
**नमाम्यहं जगद्धात्रीं नमामि परमेश्वरीम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । प्रार्थनापूर्वकं ध्यायामि ।

आसनम्

**ॐ अनेकरत्नसंयुक्तं नानामणिगणान्वितम् ।**
**कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् ।**

**तोयमेतत् सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**गन्धपुष्पाक्षतोपेतं दधिदूर्वासमन्वितम् ।**

**उलूकवाहने देवि ! गृहाणाऽर्घ्यं नमोऽस्तु ते ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ कर्पूरेण सुगन्धेन सुरभिस्वादुशीतलम् ।**

**तोयमाचमनीयार्थं देवीदं प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । आचमनीयं समर्पयामि ।

स्नानीयम्

**ॐ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।**

**स्नापिताऽसि मया देवि ! तथा शान्तिं कुरुष्व मे ।**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । स्नानीयं समर्पयामि ।

पञ्चामृतम्

**ॐ पयो दधि घृतं चैव मधु च शर्करायुतम् ।**

**पञ्चामृतं मयाऽनीतं स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकस्नानम्

**गङ्गा गोदावरी चैव यमुना च सरस्वती ।**

**ताभ्यः स्नानार्थमानीतं तोयं मे प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । शुद्धोदकस्नानं समर्पयामि ।

युग्मवस्त्रम्

**ॐ निर्मितं तन्तुभिः सूक्ष्मैर्नानावर्णविचित्रतम् ।**

**वस्त्रं गृहाण मे देवि प्रीत्यर्थं तव युग्मकम् ॥**

**ॐ पट्टवस्त्रयुगं देवि ! कञ्चुकेन समन्वितम् ।**

**परिधेहि कृपां कृत्वा लक्ष्मी ! दुर्गतिनाशनम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । वस्त्रयुग्मं समर्पयामि ।

चन्दनम्

**ॐ मलयाचलसम्भूतं चन्दनाऽगरुसम्भवम् ।**

**चन्दनं देवि देविशि ! स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । चन्दनं समर्पयामि ।

हरिद्रा

**ॐ हरिद्रारञ्जिता देवि ! सुखसौभाग्यदायिनी ।**

**तस्मात्त्वां पूजयाम्यत्र सुखशान्तिं प्रयच्छ मे ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । हरिद्रां समर्पयामि ।

कुङ्कुमम्

**ॐ कुङ्कुमं कान्तिदं दिव्यं कामिनीकामसम्भवम् ।**

**कुङ्कुमेनाऽर्चिते देवि ! प्रसीद परमेश्वरि ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । कुङ्कुमं समर्पयामि ।

अक्षताः

**ॐ अक्षतान् निर्मलान् शुद्धान् मुक्ताफलसमन्वितान् ।**

**गृहाणेमान् महादेवि ! देहि मे निर्मलां धियाम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । अक्षतान् समर्पयामि ।

सिन्दूरम्

**ॐ सिन्दूरमरुणाभासं जपाकुसुमसन्निभम् ।**

**पूजिताऽसि मया देवि ! प्रसीद परमेश्वरि ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । सिन्दूरं समर्पयामि ।

रक्तचन्दनम्

**ॐ रक्तचन्दनसंम्मिश्रं पारिजातसमुद्भवम् ।**

**मया दत्तं महालक्ष्मि चन्दनं प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । रक्तचन्दनं समर्पयामि ।

पुष्पमाला

**ॐ पद्मशन्नजपुष्पादिशतपत्रैर्विचित्रिताम् ।**

**पुष्पमालां प्रयच्छामि गृहाणत्वं सुरेश्वरी ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । पुष्पमालां समर्पयामि ।

दूर्वाङ्कुरान्

**ॐ दूर्वाङ्कुरान् सुहरितानमृतान् मङ्गलप्रदान् ।**

**आनीतांस्तव पूजार्थं गृहाण जगदीश्वरि ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । दुर्वाङ्कुरान् समर्पयामि ।

अङ्गपूजा

ॐ चपलायै नमः । पादौ पूजयामि ।

ॐ चञ्चलायै नमः । जानुनी पूजयामि ।

ॐ कमलायै नमः । कटिं पूजयामि ।

ॐ कात्यायन्यै नमः । नाभिं पूजयामि ।

ॐ जगन्मात्रे नमः । जठरं पूजयामि ।

ॐ विश्ववल्लभायै नमः । वक्षस्थलं पूजयामि ।

ॐ कमलवासिन्यै नमः । भुजौ पूजयामि ।

ॐ पद्मकमलायै नमः । मुखं पूजयामि ।

ॐ कमलपत्राक्ष्यै नमः । नेत्रत्रयं पूजयामि ।

ॐ श्रियै नमः । शिरः पूजयामि । इत्यङ्गपूजा ।

धूपः

**ॐ दशाङ्गं गुग्गुलं धूपं चन्दनागरुसंयुतम् ।**

**समर्पितं मया भक्त्या देवि ! त्वं प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । धूपमाघ्रापयामि ।

दीपः

**ॐ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**

**दीपं गृहाण देवेशि ! त्रैलोक्यतिमिरापहम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**नैवेद्यं गृह्यताम् देवि ! भक्तिं मे ह्यचलां कुरु ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । नैवेद्यं निवेदयामि ।

ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा । मध्ये पानीयम् उत्तरापोशानं हस्तप्रक्षालनं मुखप्रक्षालनं जलं समर्पयामि ।

फलम्

**ॐ इदं फलं मया देवि ! स्थापितं पुरतस्तव ।**

**तेन मे सफला वाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । फलं समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलमहद्दिव्यं नागवल्लीदलैर्युतम् ।**

**एलाचूर्णादिसहितं ताम्बूलं प्रतिगृह्यताम् ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । ताम्बूलं समर्पयामि ।

दक्षिणाद्रव्यम्

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । दक्षिणाद्रव्यं समर्पयामि ।

आरार्तिक्यम्

**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि गृहाण जगदम्बिके ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । आरार्तिक्यं समर्पयामि ।

पुष्पाञ्जलिः

**ॐ विष्णुप्रिये नमस्तुभ्यं नमस्तुभ्यं जगत्पते ।**

**अतिहन्त्री नमस्तुभ्यं समृद्धं कुरु मे सदा ॥**

**ॐ नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते ।**

**शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते ॥**

ॐ श्रीमहालक्ष्मीदेव्यै नमः । मन्त्रपुष्पाञ्जलिं समर्पयामि ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥**

साष्टाङ्गप्रणामं कृत्वार्घ्यं दद्यात् ।

विशेषार्घ्यदानमन्त्रः

**ॐ यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।**

**निवेदितं च नैवेद्यं गृहाण जगदीश्वरि !**

**ॐ गन्धप्रसूनसंयुक्तं फलमुद्राप्रशोधितम् ।**

**गृहाणार्घ्यं महालक्ष्मि ! कार्यसिद्धिकरा भव ॥** विशेषार्घ्यं समर्पयामि महालक्ष्म्यै नमः ।

एवं पूजां निर्वर्त्य प्रतिवर्षम् आश्विनकृष्णाष्टम्यां पूजासमापनावसरे उत्तराङ्गपूजां विधाय आरतिपुष्पाञ्जलिपूर्णपात्रादिकं च कृत्वा व्रतं गृहीत्वोद्यापनहवनादिकं विधाय षोडशदम्पतीपूजनं भोजनादिकं कारयित्वा व्रतं समापयेत् ।

## शब्दार्थाः

| | |
|---|---|
| व्रतपूर्वदिने | = व्रत थाल्ने दिनभन्दा एक दिन पहिला |
| उपवासः | = जुन देवतालाई प्रधान मानी व्रत लिइएको हो उनलाई मन, वचन र कर्मले समर्पणभाव राखी केही नखाई (यथासम्भव) बस्ने कार्य |
| ऐहिकः | = यो लोकका लागि |
| पारलौकिकः | = परलोकका लागि |
| मोक्षः | = मृत्युपश्चात् ईश्वरमा मिल्ने काम, मुक्ति |
| काम्यव्रतम् | = कामना राखेर गरिएको व्रत |
| षोडशवर्षम् | = १६ वर्षसम्म |

## अभ्यासार्थाः प्रश्नाः

१. **महालक्ष्मीव्रतं कदा प्रारभ्यते ?**

२. **महालक्ष्मीव्रतं कतिवर्षपर्यन्तं गृह्यते ?**

३. **महालक्ष्मीव्रतस्योद्यापनं कस्मिन् वर्षे क्रियते ?**

४. **महालक्ष्मीव्रतेन किं किं प्राप्यते ?**

५. **महालक्ष्मीव्रतस्य मुख्यदेवता का अस्ति ?**

६. **महालक्ष्मीव्रतस्य प्रथमवर्षीयव्रतग्रहणप्रकारं प्रदर्शयत ।**

७. **महालक्ष्मीव्रतस्य सङ्कल्पवाक्यं लिखत ।**

८. **नामपूजायाः शब्दस्वरूपं प्रदर्शयत ।**

९. **महालक्ष्म्या ध्यानमन्त्रं लिखत ।**

१०. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

व्रतम्, उद्यापनम्, षोडशवर्षम्, मोक्षः, पारलौकिकम्

**११. परस्परं मेलयत**

| | |
|---|---|
| (क) ॐ श्रियै नमः | पादौ पूजयामि |
| (ख) ॐ विश्ववल्लभायै नमः | नाभिं पूजयामि |
| (ग) ॐ जगन्मात्रे नमः | कटिं पूजयामि |
| (घ) ॐ पद्मकमलायै नमः | शिरः पूजयामि |
| (ङ) ॐ कात्यायन्यै नमः | वक्षस्थलं पूजयामि |
| (च) ॐ चपलायै नमः | जठरं पूजयामि |
| (छ) ॐ कमलायै नमः | मुखं पूजयामि |
| | हस्तौ पूजयामि |

## प्रयोगाभ्यासः

१. गुरुमुखात् महालक्ष्मीव्रतमहत्त्वं श्रुणुत ।

२. महालक्ष्म्या ध्यानमन्त्रं सम्यगुच्चार्य कण्ठस्थं कुरुत ।

३. समीपस्थलक्ष्मीमन्दिरे सरस्वतीमन्दिरे वा गत्वा महालक्ष्मीपूजायोजनं कुरुत ।

४. आवाहनादिपूजाक्रमं परस्परं श्रावयत ।

५. महालक्ष्मीव्रतविषये कक्षायां परस्परं चर्चां कुरुत ।

षष्ठः पाठः

# दुर्गाव्रतपूजाविधिः

## महत्त्वम्

चैत्रशुक्लप्रतिपदि आश्विनशुक्लप्रतिपदि वा प्रथमदिने शुभमुहूर्ते घटस्थापनं कृत्वा तदुपरि दुर्गादेव्याः स्थापनपूर्वकं पूजनं क्रियते। दुर्गासप्तशत्याः पाठारम्भश्च तस्मिन्नेव दिने तत्रैव भवति। सति सम्भवे श्रीमद्देवीभागवतमहापुराणवाचनं शतचण्डीसहस्रचण्डीपाठं वा क्रियते। देव्या आराधनाय तन्त्रसाधनाय साक्षात्कारकरणाय च सिद्धकालत्वेनायं नवरात्रकालो गृह्यते। दुर्गाराधनकालो विशेषेण प्रतिवर्षे बारद्वयमायाति। शारदीयनवरात्रो वासन्तिकनवरात्रश्च। आश्विनशुक्लप्रतिपदमारभ्य दशमीपर्यन्तं शारदीयनवरात्रम्। चैत्रशुक्लप्रतिपदमारभ्य दशमीपर्यन्तं वासन्तिकनवरात्रम्। शास्त्रे समानरुपेण गृहीतेऽपि अस्माकं देशे शारदीयनवरात्रोत्सवस्य प्रचलनं विशेषेण मानयन्ति। तत्र भगवत्या उपासनया बलबुद्धिज्ञानजयविजयलक्ष्मीकीर्तिपुत्रपौत्रधनधान्यदीर्घायुष्यादीनि सर्वाण्यपि प्राप्यन्ते। तथैव रोगशोकभयमनस्तापादयः सर्वेऽशुभा दूरीभवन्ति। दुर्गाराधनाद्वारा ऐहिकं सर्वविधसुखं सम्प्राप्य पारलौकिकमोक्षपदं च सहजतया प्राप्तुं शक्यते।

## पूजाविधिः

चैत्रशुक्लप्रतिपदि आश्विनशुक्लप्रतिपदि वा प्रातःकाले नित्यकृत्यं समाप्य कदलीस्तम्भादिभिः सुसज्जितदुर्गाराधनामण्डपे पूजासामग्रीं सम्पाद्य सपत्नीकः कर्ता आचमनादिकं कृत्वा कर्मपात्रञ्च विधाय प्रतिज्ञासङ्कल्पं ब्राह्मणवरणपुण्याहवाचनादिकं कृत्वा दीपकलशगणेशादिसहितान् मण्डपस्थदेवान् सम्पूज्य प्रधानदेवतादुर्गापूजनं प्रारभेत्।

## प्रतिज्ञासङ्कल्पः

हरिः ॐ तत्सदित्यादि पूर्वसङ्कल्पमुच्चार्य अहं मम श्री महाकालीमहालक्ष्मी-महासरस्वती-श्रीष्टदेवतास्वरूपिणीभगवतीदुर्गादेवीप्रीतिद्वारा सर्वपापक्षय-सकलारिष्ट-सर्वापच्छान्तिपूर्वकम् इह जन्मनि दीर्घायुरारोग्यविपुलधनधान्यादिनानाविधैश्वर्य-पुत्रपौत्राद्यविच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिध्यर्थम् अपरजन्मनि श्रीभगवतीदुर्गापदप्राप्त्यर्थं शारदनवरात्राङ्गत्वेन दीपकलशगणेशपूजनं घटस्थापनं यवारोपणं

स्वर्णनिर्मितप्रतिमायां प्रतिदिनं श्रीदुर्गापूजनं कुमारीपूजनं सप्तशतीपाठं श्रीशुक्लयजुर्वेदपाठं च स्वयं प्रतिनिधित्वेन ब्राह्मणद्वारा वा करिष्ये ।

एवं घटस्थापनादिने सङ्कल्प्य नवमीपर्यन्तं नित्यपूजापाठादिकं क्रियते । षष्ठे दिवसे बिल्वनिमन्त्रणं सप्तमे सरस्वत्या आवाहनं नवपत्रिकाप्रवेशश्च । अष्टमे शैलपुत्र्यादिनवदुर्गापूजा बलिदानादिकर्म अर्द्धरात्रौ कालरात्रिपूजाविशेषश्च नवमे पाठसमापनं हवनादिकर्म कन्यापूजनं च दशमे शुभमुहूर्ते देवीविसर्जनं गुरुपुरोहितमान्यजनेभ्यः टीकाप्रसादग्रहणञ्च क्रियते ।

## पूजासामग्री

### पहिलो दिनको पूजासामग्री

जमरा राख्ने बालुवा वा माटो । उम्रने खालको जौ । घटस्थापना गर्ने घडा । रेखीको पिठो । अबिर । कर्मपात्र । अर्घ त्रिखुटी । शङ्ख र डमरु । पूजासामग्री । फूल । दुबो । माला । बेलपत्र । बेलपत्रको माला । गोकुलधूप । धुपौरो । बत्ती । कपूर । नौसुते बत्ती ९ जोर । वस्त्र । जनै । सुपारी । दियो । कलश । गणेश । दियो छोप्ने ऐना घर । तिलको तेल । रोटी नैवेद्य । फलफूल । ब्रह्मा, क्षेत्रपालहरू थाप्ने चामल टपरी । बारा । पान-मसला । बलिको निमित्त-कुभिन्डो । काँक्रो, मुला, उखु, बेल, नरिवलहरू । खड्ग । कन्यापूजाको निमित्त वस्त्र, सौभाग्य, आभूषण, नैवेद्य, पानमसला, दक्षिणा ।

प्रतिपदादेखि लिएर दशमीको दिनसम्मलाई पूजाका सामग्रीहरू प्रायः सबै यिनै हुन् ।

### छैटौँ दिनको पूजासामग्री विशेष

षष्ठीको दिनमा बिल्वनिमन्त्रणको निमित्त सामान्य पूजासामग्री, कर्मपात्रो, दियो, कलश, गणेश, तेल, बेसार, खिचडी या दाल, चामल, जौ, सर्सिउँ, धूप, बत्ती, नैवेद्य इत्यादि ।

### सातौँ दिनको पूजासामग्री विशेष

सप्तमीको दिनमा सरस्वती पूजाको निमित्त पूजासामग्री, वस्त्र, धूप, बत्ती, नैवेद्य, पुस्तक, मसीदानी, कलम इत्यादि ।

दिउँसो अपराह्नतिर नवपत्रिका प्रवेश, बेलुका नवपत्रिका पूजा ।

नवपत्रिका- केरा, दारिम, धान, हलेदो, मानक, कचु, बेल, अशोक, जयन्ती ।

### आठौँ दिनको पूजासामग्री विशेष

अष्टमीको दिनको निमित्त कालरात्री पूजाको सामग्री, नवदुर्गा थाप्ने केराको पात वा थाली

वा चामल टपरी ९ । सुपारी ९ । सौभाग्य वस्त्र, बत्ती, नैवेद्य, फलफूलहरू ९/९ भाग । शस्त्रअस्त्र आदि हतियार । बलिको सामग्री, पायस, बारा, चिउरा, केरा, दही आदि ।

नवौँ दिनको पूजासामग्री

त्रिशूलिनी पूजाको सामग्री । धूप, दीप, नैवेद्य आदि । १ वा ९ जना कन्यापूजाको सामग्री, शक्तिअनुसार वस्त्र, सौभाग्य, नैवेद्य आदि ।

## दसौँ दिनको पूजासामग्री विशेष

जया, विजया र अपराजिताको लागि सौभाग्यादिसहित पूजा सामग्री, देवीको नित्यपूजाको सामग्री, मान्यजनबाट टीका, प्रसाद ग्रहण गर्ने व्यवस्था आदि ।

**दुर्गायन्त्रम्**

**अथ दुर्गापूजाविधिः**

**प्रथमदिनकृत्यम्**

**दीपकलशगणेशादिपूजनम्**

आश्विनशुक्लप्रतिपत्तिथौ ज्योतिर्विदादिष्टे सुमुहूर्ते श्रीदुर्गादेव्याः पूजास्थानं संमार्ज्य उपलिप्य शुद्धबालुकां मृत्तिकां वा समानीय यवरोपणवेदीं परिकल्प्य पूजासामग्रीं सम्पाद्य निकृत्तकेशनखश्मश्रुः कृतनित्यक्रियो यजमानः रक्ताम्बरधरो भूत्वा नवरात्रपर्यन्तं नक्तभोजी हस्तौ पादौ प्रक्षाल्य शुभासने पूर्वाभिमुखी उपविश्य विष्णुं ध्यायेत्

**ॐ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्** ।

**प्रसन्नवदनं ध्याये सर्वविघ्नोपशान्तये** ॥

**ॐ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः** ।

**येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः** ॥

इति ध्यात्वाऽऽचम्य आसनं शोधयेत् । हस्ते जलं गृहीत्वा

**ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता** ।

**त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनम्** ॥

इत्यासनभूमिं संसिच्य प्रणमेत् । ततो गौरसर्षपान् यवान् वा आदाय घण्टां वादयन्

**ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः** ।

**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया** ॥

इति पठित्वा सर्वतो विकिरेत् । कर्मपात्रं कृत्वा चाभिषिच्य तत्कुशादिकमादाय प्रतिज्ञासङ्कल्पं विधाय

**ॐ दुर्गे दुर्गे रक्षिणि स्वाहा दुर्गादेव्यै नमः** ।

इति मन्त्रेण प्राणानायम्य न्यासं कुर्यात् ।

तद्यथा जलमादाय ॐ अस्य श्रीजयदुर्गामन्त्रस्य नारायणऋषिर्गायत्रीछन्दः श्रीजयदुर्गादेवता ॐ दुर्गे दुर्गे बीजं रक्षिणिशक्तिः स्वाहा कीलकं पूजादौ न्यासे विनियोगः । इति भूमौ त्यजेत् ।

तत्रादौ ऋष्यादिन्यासः

ॐ नारदऋषये नमः शिरसि । ॐ गायत्रीच्छन्दसे नमः मुखे । ॐ श्रीजयदुर्गायै देवतायै नमः हृदि । ॐ दुर्गे दुर्गे बीजाय नमः गुह्ये । ॐ रक्षिणिशक्तये नमः पादयोः । ॐ स्वाहा कीलकाय नमः सर्वाङ्गे ।

अथ करन्यासः

ॐ दुर्गे अङ्गुष्ठाभ्यां नमः । ॐ दुर्गे तर्जनीभ्यां स्वाहा । ॐ दुर्गायै मध्यमाभ्यां वषट् । ॐ भूतरक्षिणि अनामिकाभ्यां हुम् । ॐ दुर्गे दुर्गे कनिष्ठिकाभ्यां वौषट् । ॐ रक्षिणि स्वाहा करतलकरपृष्ठाभ्यां फट् । इति करन्यासः ।

अथाङ्गन्यासः

ॐ दुर्गे हृदयाय नमः । ॐ दुर्गे शिरसे स्वाहा । ॐ दुर्गायै शिखायै वषट् । ॐ भूतरक्षिणि कवचाय हुम् । ॐ दुर्गे दुर्गे नेत्रत्रयाय वौषट् । ॐ रक्षिणि स्वाहा अस्त्राय फट् । इत्यङ्गन्यासः । इति न्यासान् विधाय ध्यायेत्

ध्यानम्

**ॐ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां ।**

**कन्याभिः करबालखेटविलसद्धस्ताभिरासेविताम् ॥**

**हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं ।**

**बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥**

**ॐ जटाजूटसमायुक्तामर्धेन्दुकृतशेखराम् ।**

**लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥**

**तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।**

**नवयौवनसम्पन्नां सर्वाभरणशोभिताम् ॥**

इति ध्यात्वा यथाशक्ति मूलमन्त्रजपं विधाय

**ॐ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।**

**सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि** ॥ इति जपं निवेदयेत् ।

अर्घ्यस्थापकपूर्वकं दीपकलशगणेशान् यथाविधि सम्पूज्य धूपदीपनैवेद्यानि समर्पयेत् ।

**घटस्थापनम्**

ईशानदिग्भागेऽष्टदलं विलिख्य तदुपरि धान्यं संस्थाप्य तदुपरि घटं स्थापयेत् । तत्र दध्यक्षतनानारागरञ्जितगोमयतिर्यगूर्ध्वाधोगतरेखान्वितं ताम्रं मृण्मयं वा विस्तीर्णघटं पुरत आनीय सबीजान् प्ररोहणसमर्थान् शुद्धान् यवान् वपेत् ।

मन्त्रः

**ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ।**

**यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि** ॥

इति मन्त्रेण यवान् वप्त्वा स्थापयेत् । तत्र क्रमः

**ॐ भूरसीति** भूमिशोधनम् । **ॐ धान्यमसी**ति धान्यं स्थापयेत् । **ॐ आजिघ्र कलश**मिति कलशं स्थापयेत् । **ॐ वरुणस्योत्तम्भनमसी**ति जलेनापूर्य **ॐ याऽओषधी**रिति सर्वौषधीः प्रक्षिपेत् । **ॐ हिरण्यगर्भ** इति पञ्चरत्नानि । **ॐ याः फलिनी**रिति फलानि । **ॐ ओषधयः** इति यवान् । **ॐ गन्धद्वारा**मिति चन्दनम् । **ॐ काण्डात्काण्डा**दिति दूर्वा । **ॐ स्योनापृथिवी**ति सप्तमृदः । **ॐ अश्वत्थे व** इति पञ्चपल्लवान् । **ॐ बृहस्पतेऽती**ति वस्त्रयुग्मम् । **ॐ अम्बेऽअम्बिक** इति आम्रपल्लवाँश्च प्रक्षिप्य ततः **ॐ तत्त्वायामी**ति वरुणमावाह्य पाद्यादिभिरुपचारैः सम्पूज्य **ॐ सर्वे समुद्रा** इति तीर्थान्यावाहच **ॐ कलशस्य मुखे विष्णु**रिति कलशमभिमन्त्र्य **ॐ देवदानवसंवादे** इत्यादि मन्त्रैः प्रार्थयेत् ।

पुनः कलशे **ॐ आब्रह्मन्**...। इति मन्त्रेण ब्रह्माणम्

**ॐ क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि** ।

**मा त्वा हिꣳ सीन्मा मा हिꣳ सीः** ॥

इत्यनेन क्षेत्रपालं सम्पूज्य गणपत्यादिवनस्पत्यन्तदेवाँश्चावाह्य सम्पूज्य धूपदीपनैवेद्यादिकं च कुर्यात् ।

कलशोपरि रजतस्थालीं ताम्रस्थालीं वा निधाय तत्र अष्टदलं देवीयन्त्रं नवकोणयन्त्रं वा विलिख्य तत्र स्वर्णमयीं दुर्गाप्रतिमां निधाय पूजनं कुर्यात् ।

**अथ दुर्गापूजनम्**

आचम्य प्राणानायम्याग्न्युत्तारणपूर्वकं प्रतिमायां प्राणप्रतिष्ठां कुर्यात् । तद्यथा दुर्गाप्रतिमां समानीयाग्नौ प्रतप्य पञ्चगव्येन शुद्धजलेन च प्रक्षाल्य पात्रान्तरे निधाय प्रतिमोपरि जलधारां पातयन् पठेत्

**ॐ हिमस्य त्वा जरायुणाग्ने परिव्ययामसि** ।

**पावकोऽअस्मभ्यꣳशिवो भव** ॥१॥

**उपज्मन्नुपवेतसेवतरनदीष्वा** ।

**अग्ने पित्तमपामसि मण्डूकि ताभिरागहि**

**सेमन्नो यज्ञं पावक वर्ण६ शिवङ्कृधि ॥२॥**

**अपामिदं न्ययन६समुद्रस्य निवेशनम् ।**

**अन्याँस्तेऽअस्मत्तपन्तु हेतयः**

**पावकोऽअस्मभ्य६शिवो भव ॥३॥**

**अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।**

**आदेवान्वक्षि यक्षि च ॥४॥**

**स नः पावक दीदिवोग्ने देवाँ२ऽइहावह ।**

**उप यज्ञ६हविश्च नः ॥५॥**

**पावकया यश्चितयन्त्या कृपा क्षामन्नुरुच उषसो न भानुना ।**

**तूर्वन्न यावन्नेतशस्य नू रणऽआयो घृणेन ततृषाणोऽअजरः ॥६॥**

**नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे अन्याँस्तेऽअस्मत्तपन्तु हेतयः ।**

**पावकोऽअस्मभ्य६शिवो भव ॥७॥**

इत्यग्न्युत्तारणं कृत्वा वस्त्रेण सम्मार्ज्य स्थाल्यां यन्त्रमध्ये संस्थाप्य प्रतिमाया हृद्यङ्गुष्ठं दत्वा

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोहं श्रीदुर्गादेव्याः प्राणा इह प्राणाः । ॐ आं ह्रीं... श्रीदुर्गादेव्याः जीव इह स्थितः । ॐ आं ह्रीं... श्रीदुर्गादेव्याः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञ६समिमं दधातु । विश्वे देवाः सऽइह मादयन्तामोंम्३प्रतिष्ठ ॥**

इति प्राणान्प्रतिष्ठाप्य हस्ते पुष्पाञ्जलिं गृहीत्वा श्वेतद्वीपान्निजहृदयस्थलं ततो नासाविवरेण हस्तस्थपुष्पाञ्जल्यामायान्तीं सायुधां सपरिवारां सर्वालङ्कारशोभितां निजशक्तिभिः सहितां दुर्गादेवीं ध्यायेत्

**ॐ जटाजूटसमायुक्तामर्धेन्दुकृतशेखराम् ।**

**लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥**

**अतसीपुष्पसङ्काशां सुप्रतिष्ठां सुलोचनाम् ।**

**नवयौवनसम्पन्नां सर्वाभरणभूषिताम् ॥**

**सुचारुदशनां तद्वत् पीनोन्नतपयोधराम् ।**

त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ॥
त्रिशूलं दक्षिणे विद्यात् खड्गं चक्रं तथैव च ।
तीक्ष्णबाणं तथा शक्तिं वामतो विनिबोधत ॥
खेटकं पूर्णचापं च पाशमङ्कुशमेव च ।
घण्टां च परशुं चापि वामतः सन्निवेशयेत् ॥
अधस्तान्महिषं तद्वत् विशिरस्कं प्रतिष्ठितम् ।
शिरच्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् ॥
हृदि शूलेन निर्भिन्नं तिर्यगसृग्विभूषितम् ।
रक्तरक्तीकृताङ्गं च रक्तविस्फूर्जितेक्षणम् ॥
वेष्टितं नागपाशेन भ्रुकुटीकुटिलाननम् ।
वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रतिष्ठितम् ॥
देव्यास्तु दक्षिणं पादं महिषोपरि संस्थितम् ।
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥
रक्तायमानं तद्रूपममरैः सन्निवेशयेत् ।

ॐ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ।
हस्तैश्चक्रगदासिखेटविशिखाँश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥

ॐ खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुण्डिं शिरः
शङ्खं सन्दधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥

ॐ अक्षस्रक्परशुं गदेषु कुलिशं पद्मं धनुष्कुण्डिकां
दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां

**सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥**

**ॐ घण्टाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं**

**हस्ताब्जैर्दधतीं घनान्तविलसच्छितांशुतुल्यप्रभाम् ।**

**गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महा**

**पूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥**

इति ध्यात्वा पुष्पाञ्जलिं प्रतिमायां क्षिपेत् ।

आवाहनम्

**ॐ एहि दुर्गे महाभागे रक्षार्थं मम सर्वगे ।**

**आवाहयाम्यहं देवि सर्वकामार्थसिद्धये ॥**

**रक्षां कुरु सदा भद्रे दुर्गे देवि नमोऽस्तु ते ।**

**सर्वविघ्नहरे देवि सर्वपापप्रणाशिनि ॥**

**यज्ञं रक्ष महादेवि पुत्रपौत्रप्रवर्धिनि ।**

**असुराणां क्षयकरि सर्वशत्रुविनाशिनि ॥**

**त्वं लक्ष्मीस्त्वं च ब्रह्माणी त्वं गौरी त्वं च पार्वती ।**

**दुर्गा भगवती त्वं च चण्डी नारायणीति च ॥**

**कौमारी वैष्णवी चैव शारदा त्वं सरस्वती ।**

**आगच्छ वरदे देवि दैत्यदर्पनिषूदिनी ॥**

**पूजां गृहाण सुमुखि नमस्ते शङ्करप्रिये ।**

**सर्वतीर्थमयं वारि सर्वदेवसमन्वितम् ॥**

**इमं घटं समागच्छ तिष्ठ देवगणैः सह ॥**

**ॐ जयन्ती मङ्गला काली भद्रकाली कपालिनी ।**

**दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥**

**ॐ दुर्गे दुर्गे रक्षिणि स्वाहा । ॐ भो भगवति दुर्गे आगच्छ अस्मिन् घटे निजपरिवारैः सह सुखं तिष्ठ । यावत्पूजां करोमि तावत्त्वं सुस्थिरा भव ।** इत्यावाह्य ।

पुनः पुष्पाक्षतादिभिः

**ॐ देवीसिंहासनाय नमः । ॐ मण्डूकादिपीठदेवताभ्यो नमः ।**

इति सम्पूज्य । ततो देव्याः परित ईशानादिविदिक्षु मध्ये च क्रमेण पूजयेत् ।

ॐ विष्णवे नमः । ॐ शिवाय नमः । ॐ विनायकाय नमः । ॐ श्रीसूर्याय नमः । इति सम्पूज्य ॐ देवीपरिवारेभ्यो नमः । इति पूजयेत् ।

अथासनम्

**ॐ नानाप्रभासमाकीर्णं नानावर्णविचित्रितम् ।**

**आसनं कल्पितं देवि प्रीत्यर्थं प्रतिगृह्यताम् ॥**

**ॐ जयन्ती मङ्गला काली भद्रकाली कपालिनी ।**

**दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥**

**ॐ दुर्गे दुर्गे रक्षिणि स्वाहा** । ॐ दुर्गादेव्यै नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ गङ्गादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम् ।**

**पाद्यं तेऽहं प्रदास्यामि गृहाण परमेश्वरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा** । ॐ दुर्गादेव्यै नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ गन्धाक्षतैश्च सहितं फलपुष्पयुतं तव ।**

**अर्घ्यं गृहाण दत्तं मे प्रसीद परमेश्वरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा** । ॐ दुर्गादेव्यै नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ इमा आपो मया भक्त्या तव पाणितलेऽर्पिता ।**

**आचम्यतां महादेवि प्रीता शान्तिं प्रयच्छ मे ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा** । ॐ दुर्गादेव्यै नमः । आचमनीयं समर्पयामि ।

स्नानीयम्

**ॐ ज्ञानमूर्ते भद्रकालि दिव्यमूर्ते सुरेश्वरि ।**

**स्नानं गृहाण देवेशि नारायणि नमोऽस्तु ते ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । स्नानीयं समर्पयामि ।

मधुपर्कम्

**ॐ मधुपर्कमिमं देवि दधिमध्वाज्यसंयुतम् ।**

**ब्रह्मणा निर्मितं पूर्वं गृहण देवि महेश्वरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । मधुपर्कं समर्पयामि ।

पञ्चामृतम्

**ॐ पयोदधिघृतं चैव शर्करामधुसंयुतम् ।**

**पञ्चामृतं कल्पयामि प्रीत्यर्थं प्रतिगृह्यताम् ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकम्

**ॐ गङ्गा गोदावरी चैव यमुना च सरस्वती ।**

**ताभ्यः स्नानार्थमानीतं तोयं ते प्रतिगृह्यताम् ॥**

**ॐ जयन्ती मङ्गला ... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । शुद्धोदकं समर्पयामि ।

उद्वर्तनम्

**ॐ गन्धकर्पूरसंयुक्तं कस्तूर्यादिसुवासितम् ।**

**अङ्गोद्वर्तनकं देवि गृहाण परमेश्वरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । उद्वर्तनं समर्पयामि ।

गङ्गोदकम्

**ॐ परमानन्दबोधाब्धि निमग्ननिजमूर्तये ।**

**साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यसुरारि ते ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादिव्यै नमः । गङ्गोदकं समर्पयामि ।

ततः स्नानाङ्गमाचनीयम्

**ॐ दुर्गे दुर्गे रक्षिणि स्वाहा दुर्गा देव्यै नमः ।** स्नानाङ्गमाचमनीयं समर्पयामि ।

वस्त्रयुग्मम्

**ॐ निर्मितं तन्तुभिः सूक्ष्मैर्नानावर्णविचित्रितम् ।**

**वस्त्रं गृहाण मे देवि प्रीत्यर्थं तव युग्मकम् ।**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादिव्यै नमः । वस्त्रयुग्मं समर्पयामि ।

सौभाग्यालङ्कारान्

**ॐ अलङ्कारान् महादिव्यान् नानारत्नविनिर्मितान् ।**

**गृहाण देवदेवि त्वं प्रसीद सुरनायिके ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादिव्यै नमः । सौभाग्यालङ्कारान् समर्पयामि ।

चन्दनम्

**ॐ मलयाद्रिसमुद्भूतं कुङ्कुमागरुवासितम् ।**

**मया निवेदितं भक्त्या चन्दनं प्रतिगृह्यताम् ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादिव्यै नमः । चन्दनं समर्पयामि ।

सिन्दूरम्

**ॐ उद्यदादित्यसङ्काशं स्त्रीणां सीमन्तभूषणम् ।**

**वीरालङ्करणं देवि सिन्दूरं प्रतिगृहचताम् ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादिव्यै नमः । सिन्दूरं समर्पयामि ।

आभीरकम्

**ॐ चन्दनागरुकस्तूरीकुङ्कुमद्रवसंयुतम् ।**

**आभीरचूर्णं रुचिरं त्वं गृहाण दिगम्बरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । आभीरकं समर्पयामि ।

रक्तदध्यक्षताः

**ॐ अक्षताश्च सुरश्रेष्ठे कुङ्कुमेन च रञ्जिताः ।**

**मया निवेदिता भक्त्या प्रीत्यर्थं प्रतिगृह्यताम् ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । रक्तदध्यक्षतान् समर्पयामि ।

यवतिलाः

**ॐ शुभ्रान् यवान् कृष्णतिलान् हरिदेहसमुद्भवान् ।**

**सर्वदेवप्रियं देवि गृहाण जगदम्बिके ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । यवतिलान् समर्पयामि ।

पुष्पाणि

**ॐ तुरीयवनसम्भूतं नानागुणमनोहरम् ।**

**शारदीयमिदं पुष्पं गृह्यतां सुरवन्दिते ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । पुष्पाणि समर्पयामि ।

पुष्पमाला

**ॐ माल्यानि च सुगन्धीनि ग्रथितानि प्रयत्नतः ॥**

**मयाहृतानि पूजार्थं गृहाण वरवर्णिनि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । पुष्पमालां समर्पयामि ।

विल्वपत्राणि

**ॐ अमृतोद्भवश्रीवृक्षपत्रमाल्यमिदं शुभम् ।**

**गृहाण परमेशानि वरदा भव सुव्रते ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा** । ॐ दुर्गादेव्यै नमः । बिल्वपत्राणि समर्पयामि ।

**अङ्गपूजा**

रक्ताक्षतपुष्पबिल्वपत्रादिकं गृहीत्वा

ॐ महाकाल्यै नमः पादौ पूजयामि । ॐ मङ्गलायै नमः गुल्फौ पूजयामि । ॐ कात्यायन्यै नमः जानुनी पूजयामि । ॐ भद्रकाल्यै नमः ऊरू पूजयामि । ॐ कमलायै नमः कटिं पूजयामि । ॐ शिवायै नमः नाभिं पूजयामि । ॐ क्षमायै नमः उदरं पूजयामि । ॐ स्कन्दायै नमः हृदयं पूजयामि । ॐ नानास्त्रधारिण्यै नमः बाहू पूजयामि । ॐ महिषासुरमर्दिन्यै नमः कण्ठं पूजयामि । ॐ जगन्मय्यै नमः मुखं पूजयामि । ॐ जगन्मय्यै नमः दन्तान् पूजयामि । ॐ जगद्धात्र्यै नमः नासिकां पूजयामि । ॐ उमायै नमः नेत्रे पूजयामि । ॐ सुरवन्दितायै नमः कर्णौ पूजयामि । ॐ विन्ध्यवासिन्यै नमः ललाटं पूजयामि । ॐ सर्वेश्वर्यै नमः शिरः पूजयामि । ॐ दुर्गायै नमः सर्वाङ्गं पूजयामि । इत्यङ्गपूजा ।

धूपः

**ॐ दशाङ्गं गुग्गुलं धूपं चन्दनागुरुवासितम् ।**

**मया निवेदितं भक्त्या गृहाण परमेश्वरि ॥**

ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा । ॐ दुर्गादेव्यै नमः । धूपमाघ्रापयामि ।

दीपः

**ॐ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**

**दीपं गृहाण देवि त्वं त्रैलोक्यतिमिरापहम् ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा** । ॐ दुर्गादेव्यै नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**भक्ष्यभोज्यसमायुक्तं नैवद्यं प्रतिगृह्यताम् ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । नैवद्यं समर्पयामि ।

पानीयम्

**ॐ कर्पूरैलासमायुक्तं स्वच्छं स्वादु सुशीतलम् ।**

**पानीयं मधुरं दत्तं तव प्रीत्यर्थमादरात् ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । पानीयं समर्पयामि ।

आचमनीयम्

**ॐ कर्पूरवासितं तोयं गङ्गाजलसमिन्वतम् ।**

**आचम्यतां महादुर्गे कल्पितं जगदीश्वरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । आचमनीयं समर्पयामि ।

चन्दनादिकरोद्वर्तनम्

**ॐ गन्धकर्पूरसंयुक्तं कस्तूर्यादिसुवासितम् ।**

**करोद्वर्तनकं देवि गृहाण जगदीश्वरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । करोद्वर्तनं समर्पयामि ।

फलम्

**ॐ फलमूलानि प्राप्तानि ग्राम्यारण्यानि यानि च ।**

**तानि स्वीकुरु सर्वज्ञे ममोपरि दयां कुरु ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । फलं समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।**

**एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । ताम्बूलं समर्पयामि ।

नारिकेलफलम्

**ॐ इदं फलं मया देवि स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । नारिकेलफलं समर्पयामि ।

दक्षिणाद्रव्यम्

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । दक्षिणाद्रव्यं समर्पयामि ।

सुगन्धिद्रव्यम्

**ॐ पुष्पसारमिदं स्वच्छं सुगन्धि सुमनोहरम् ।**

**प्रीतिदं सर्वलोकानां त्वं गृहाण दिगम्बरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । सुगन्धिद्रव्यं समर्पयामि ।

नीराजनम्

**ॐ नीराजनं तव पुरः करोम्युज्ज्वलदीपकैः ।**

**गृहाण तिलतैलाज्यसम्भवैः शक्तिसम्मितैः ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । नीराजनं समर्पयामि ।

कर्पूरार्तिक्यम्

**ॐ कदलीगर्भसम्भूतं विद्युदग्निसमप्रभम् ।**

**कर्पूरदीपं देवेशि गृहाण जगदम्बिके ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । कर्पूरार्तिक्यं समर्पयामि ।

दपर्णम्

**ॐ वृत्तश्चैवोपचारेषु जलप्राधानिकेषु च ।**

**गृह्ण गात्रावलोकार्थं दर्पणं सुरसुन्दरि ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । दर्पणं समर्पयामि ।

चामरम्

**ॐ शशाङ्ककरसङ्काशं हेमडिण्डिरपाण्डुरम् ।**

**प्रोत्सारयाशु दुरितं चामरामरवल्लभ ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । चामरं दोलयामि ।

व्यजनम्

**ॐ बर्हिबर्हकृताकारं मध्यदण्डसमन्वितम् ।**

**गृहचतां व्यजनं दुर्गे देहस्वेदापनुत्तये ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । व्यजनं दोलयामि ।

ततो यथाशक्ति मूलमन्त्रं जपित्वा हस्ते जलमादाय

**ॐ गुह्यातिगुह्यगोप्तृ त्वं गृहाणास्मत्कृतं जपम् ।**

**सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥**

इति देव्या वामहस्ते जपं निवेदयेत् ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥**

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । प्रदक्षिणं समर्पयामि ।

छत्रोपानहादिकम्

**ॐ जयन्ती मङ्गला... । ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ।** ॐ दुर्गादेव्यै नमः । छत्रोपानहादिकं समर्पयामि ।

**यवारोपणम्**

तद्यथा **ॐ भूरसि भूमिरसि** इति मन्त्रेण भूमिं संशोध्य **ॐ अश्मा च मे मृत्तिकाश्च मे** इति मन्त्रेण बालुकां मृदं वा संस्थाप्य

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।**

इति मन्त्रेण स्थण्डिलोपरि कुशानास्तीर्य **ॐ शन्नो देवी** इति कर्मपात्रोदकेनाभ्युक्ष्य

**ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽओषधीराविवेश । वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम्** ॥

इत्यनेन गोमूत्राक्तान् शुद्धान् यवानादाय **ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः । ॐ जयन्ती** इति मन्त्रौ पठन् वेद्यां विकिरेत् । ततो गन्धपुष्पादिना **ॐ भगवती प्रसादरूपेभ्यो करिष्यमाणेभ्यो यवेभ्यस्तदधिष्ठात्रीदेवीदेवेभ्यश्च नमः** । इति पूजयेत् ।

**ब्राह्मणवरणम्**

ततो ब्राह्मणानाहूय धौतोत्तरीयगन्धपुष्पाक्षतफलादिकं गृहीत्वा वेदपाठार्थं चण्डीपाठार्थं च वृणुयात् ।

ॐ अद्येह अहं मम श्रुतिस्मृतिपुराणागमोक्तफलावाप्तये श्रीमहाकालीमहालक्ष्मी-महासरस्वतीइष्टदेवतास्वरूपिणीभगवतीदुर्गादेवीप्रीतये अद्यारभ्य नवमीपर्यन्तं साङ्गोपाङ्गं सप्तशतीस्तोत्रपाठं यजुर्वेदपारायणं (अन्यदपि) स्तोत्रपाठं वा ब्राह्मणद्वारा (स्वयं वा) करिष्ये । इति संकल्प्य ब्राह्मणान् वृत्वा कारयेत् स्वयं वा कुर्यात् ।

**कूष्माण्डबलिदानम्**

देव्यग्रे भूमौ षट्कोणं त्रिकोणं वा मण्डलं विलिख्य तत्र **ॐ मण्डलदेवताभ्यो नमः** इति पुष्पाक्षतैः सम्पूज्य लक्षणयुतं कूष्माण्डं यन्त्रोपरि स्थापयेत् ।

ततः कर्मपात्रोदकेन सम्प्रोक्ष्य **ॐ कूष्माण्डबलये नमः** इति सम्पूज्य **ॐ खड्गाय नमः** इति सम्प्रोक्ष्य सम्पूज्य **भो खड्ग ! मया सम्पूजितोऽसि क्षमस्व** इति प्रार्थयेत् ।

ततः कुशादीन्यादाय ॐ अद्येह अहं सशैलवनकाननभूमिदानजन्यफलसमफलप्राप्तिकामः श्रीदुर्गादेवीप्रीत्यर्थं कूष्माण्डमहाफलाय महामहिषरूपाय महाद्भुतदानवाय श्रीदुर्गात्रिपुरसुन्दरीमहाकालीशाकम्भरीप्रियाय महाष्टमीनवमीसंयुताय मम सकलशत्रुदुष्टजनान् भक्षय भक्षय प्रसादं कुरु कुरु इमं कूष्माण्डबलिं महिषमर्दिनीप्रीतये अर्पयिष्ये ।

इति सङ्कल्प्य घण्टाडमरुवाद्यघोषपुरःसरं भगवती कौशिकी कूष्माण्डबलिना आप्यायताम् इति देव्यै समर्पयेत् ।

ततः कर्कटीक्षुदण्डमूलकबिल्वनारिकेलादिकं कुशादिसहितमादाय

ॐ अद्येह ममायुरारोग्यैश्वर्योदयाद्यनेकविधोत्तरोत्तरहर्षविजयोदयादिविवृद्ध्यर्थं श्रीदुर्गाभगवतीप्रीत्यर्थं बल्यर्थे इमानि कर्कटीक्षुमूलकबिल्वनारिकेलादीनि अहमर्पयिष्ये । इति सङ्कल्प्य समर्पयेत् ।

पुनस्तथैव घृतपायसबटकलाजापृथुकसक्तुतण्डुलादीनि यथासम्भवं देव्यै समर्पयेत् ।

**कृशरबलिदानम्**

देव्या ईशानदिग्भागे चतुष्कोणात्मकं नवकोष्ठमण्डलं विलिख्य कृशरबलिं वामहस्ताङ्गुष्ठेन कुशादिकं दक्षहस्तेन गृहीत्वा

ॐ पूर्वोक्तसङ्कल्पसिद्धिरस्तु अद्येह अहं मम श्रीदुर्गादेवीप्रीतिद्वारा नानाप्रतिबन्धनिवारणपूर्वकसकलाभीष्टसिद्ध्यर्थम् इमं कृशरबलिं समर्पयिष्ये । इति कुशादिकं भूमौ निक्षिप्य लिखितनवकोष्ठके पूर्वादिदक्षिणावर्तक्रमेण बलिं दद्यात् ॐ जयन्त्यै नमः । ॐ मङ्गलायै नमः । ॐ काल्यै नमः । ॐ भद्रकाल्यै नमः । ॐ कपालिन्यै नमः । ॐ दुर्गायै नमः । ॐ क्षमायै नमः । ॐ शिवायै नमः । ॐ धात्र्यै नमः । इति समर्पयेत् ।

पुष्पाञ्जलिः

**ॐ या देवी मधुकैटभप्रमथिनी या माहिषोन्मूलनी**

**या धूम्रेक्षणचण्डमुण्डमथनी या रक्तबीजाशनी ।**

**शक्तिः शुम्भनिशुम्भदैत्यदलनी या सिद्धिलक्ष्मीः परा**

**सा देवी नवकोटिमूर्तिसहिता मां पातु विश्वेश्वरी ॥ १ ॥**

**ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः**

**स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।**

**दारिद्र्यदुःखभयहारिणि का त्वदन्या**

**सर्वोपकारकरणाय सदार्द्रचित्ता ॥ २ ॥**

**ॐ शरणागतदीनार्तपरित्राणपरायणे ।**

**सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ ३ ॥**

**ॐ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।**

**शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ४ ॥**

**ॐ जयन्ती मङ्गला काली भद्रकाली कपालिनी ।**

**दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥ ५ ॥**

इति मन्त्रैः पुष्पाञ्जलिं समर्पयेत् ।

ततो यथाशक्ति जपपाठहवनादिकं कृत्वा हस्ते गन्धपुष्पाक्षतादीन्यादाय देवीं स्तुवीत

**ॐ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।**

**द्रव्यमारोग्यविजयं देहि देवि नमः सदा ॥ १ ॥**

**भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि ।**

**देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा ॥ २ ॥**

**सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके**

**शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ३ ॥**

**रूपं देहि जयं देहि भगं भवति देहि मे**

**पुत्रान् देहि धनं देहि सर्वान्कामान्प्रदेहि मे ॥ ४ ॥**

**दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम् ।**

**सर्वलोकप्रणेत्रीं च प्रणमामि सदा प्रियाम् ॥ ५ ॥**

**मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् ।**

**विश्वेश्वरीं विश्वधात्रीं चण्डिकां प्रणमाम्यहम् ॥ ६ ॥**

**सर्वदेवमयीं देवीं सर्वरोगभयापहाम् ।**

**ब्रह्मेशविष्णुनमितां प्रणमामि सदा शिवाम् ॥ ७ ॥**

**विन्ध्यस्थां विन्ध्यनिलयां विन्ध्याचलनिवासिनीम् ।**

**योगिनीं योगधात्रीं च योगनिद्रां नमाम्यहम् ॥ ८ ॥**

**ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम् ।**

**प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् ॥ ९ ॥**

**य इदं पठते स्तोत्रं श्रृणुयाद्वापि यो नरः ।**

**सर्वपापैस्तु निर्मुक्तो मोदते दुर्गया सह ॥ १० ॥** इति स्तुतिः ।

ततः क्षमापनम्

**ॐ भो भगवति दुर्गे जगत्त्राणकारिणि न्यूनातिरिक्तं सर्वं क्षमस्व** ।

इति क्षमाप्य दण्डवत्प्रणमेत् ।

ततः शक्तौ सत्यां कन्यापूजनं कुर्यात् । तद्यथा

द्विवर्षीयां कन्यामानीय कुमारीति नाम्ना सम्बोध्य पादौ प्रक्षाल्य चन्दनाक्षतपुष्पमाला-सौभाग्यालङ्कारवस्त्रधूपदीपनैवेद्यभक्ष्यभोज्यफलद्रव्यादिभिस्तां सम्पूज्य प्रार्थयेत्

**ॐ जगत्पूज्ये सर्ववन्द्ये सर्वशक्तिस्वरूपिणि** ।

**पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते** ॥

इति सम्प्रार्थ्य प्रणम्य विसर्जयेत् । नवम्यां सकृन्नवकन्यापूजने तु तत्तन्मन्त्रानुद्धृत्य प्रार्थयेत् । इति कन्यापूजा ।

ततो घण्टाडमरुगीतवाद्यपुरःसरं समुत्थायेक्षुखण्डादिकं प्रसादभक्षणं कुर्वन् यथा सुखं विहरेत् ।

ततः सायङ्काले **ॐ जयन्ती मङ्गले**त्यादि मन्त्रैर्धूपदीपनैवेद्यादिभिर्देव्या आरार्तिकं कृत्वा यथाशक्ति जपपाठादिकं च विधाय वाद्यघोषपुरःसरं जलेन यवाङ्कुराणि परिषिञ्चेत् । तत्र मन्त्रः

**ॐ यव त्वं यवरूपोऽसि यज्ञार्थे निर्मितो विधेः** ।

**देवानां तृप्तिकृद्यस्मात्तस्मात्त्वं वरदो भव** ॥ इति सायं कृत्यम् ।

इति प्रतिपत्कृत्यविधिः । एवं द्वितीयतृतीयादिदिनेष्वपि अनेनैव क्रमेण प्रातः कृत्यं सायं कृत्यं च सर्वं कुर्यात् ।

*॥ इति प्रथमदिनकृत्यम् ॥*

## द्वितीयतृतीयचतुर्थपञ्चमदिनकृत्यानि

### द्वितीयाकृत्यम्

द्वितीयदिने द्वितीयायां तिथौ कृतनित्यक्रियः पूजास्थानमागत्यासने उपविश्य आचम्य **ॐ अपवित्रः पवित्रो वे**ति कर्मपात्रोदकेन पूजासम्भारानात्मानं चाभ्युक्ष्य तत्कुशादिकमादाय ॐ अद्येह अहं मम सकलारिष्टशान्तिपूर्वकं सर्वाभ्युदयावाप्तये श्रीमहाकालीमहालक्ष्मीमहासरस्वतीष्टदेवतास्वरूपिणी दुर्गादेवीप्रीत्यर्थं

यथामिलितोपचारैर्द्वितीयदिनविहितपूजनमहं करिष्ये। इति सङ्कल्प्य मूलेन प्राणानायम्य पूर्वोक्तप्रकारेण न्यासं ध्यानं च विधाय यथाशक्ति जपं च कृत्वा निवेदयेत्।

ततोऽर्घ्यपात्रे कर्मपात्रोदकेन सम्प्रोक्ष्य जलपञ्चामृतादिकं निक्षिप्य पाद्याद्युपचारैर्दीपकलश-गणेशादीन् गणपत्यादीन् ब्रह्माणं क्षेत्रपालं देवीपरिवारांश्च पूजयेत्।

**दुर्गापूजा**

पूर्वोक्तैर्मन्त्रैः पाद्यम् अर्घ्यम् आचमनीयं स्नानीयं मधुपर्कं पञ्चामृतं शुद्धोदकं सुगन्धतैलम् उद्वर्तनं गङ्गोदकं स्नानाङ्गमाचमनीयं वस्त्रम् आचमनं सौभाग्यद्रव्यं चन्दनं सिन्दूरम् आभीरकम् अक्षतान् यवतिलान् पुष्पाणि मालां बिल्वपत्राणि च निवेद्य ततोऽङ्गपूजां कृत्वा धूपं दीपं नैवेद्यं पानीयम् आचमनं करोद्वर्तनं फलं ताम्बूलं नारिकेलफलं दक्षिणाद्रव्यं सुगन्धिद्रव्यं नीराजनं कर्पूरारार्तिक्यं दर्पणं चामरं व्यजनं च क्रमेण समर्प्य किञ्चित्मूलमन्त्रं जप्त्वा जपं निवेद्य प्रदक्षिणां छत्रोपानहादिकांश्च समर्पयेत्।

ततः पूर्वोक्तविधिना कूष्माण्डदानं कर्कटीक्षुदण्डादि घृतपायसादि कृशरादि वा बलिं पुष्पाञ्जलिं च समर्प्य जपपाठहवनादिकं कृत्वा **ॐ महिषघ्नि महामाये** इत्यादि पठित्वा देवीं स्तुवीत। ततो देवीं क्षमाप्य दण्डवत्प्रणमेत्।

ततस्त्रिवर्षां कन्यामानीय त्रिमूर्तिनाम्ना सम्बोध्य पाद्यादिभिरुपचारैः सम्पूज्य विशेषेण केशसंस्कारकपट्टडोरकं दत्त्वा सम्भोज्य प्रार्थयेत्

**ॐ त्रिपुरां त्रिगुणां धात्रीं सुखज्ञानस्वरूपिणीम्।**

**त्रैलोक्यवन्दितां देवीं त्रिमूर्तिं पूजयाम्यहम्॥**

इति सम्प्रार्थ्य तां विसृज्य प्रसादं गृहीत्वा विरमेत्। सायङ्कालेऽपि पूर्ववत्।

*॥ इति द्वितीयाकृत्यम् ॥*

**तृतीयाकृत्यम्**

तृतीयदिने तृतीयायां तिथौ द्वितीयदिनवत् सर्वं विधाय देव्यै दर्पणसिन्दूरालक्तकं समर्प्य चतुर्वर्षीयां कन्यामानीय कल्याणीनाम्ना सम्बोध्य सम्पूज्य सम्भोज्य विशेषेण दर्पणं सिन्दूरम् आलक्तकं च दत्त्वा प्रार्थयेत्

**ॐ कालिकां तु कलातीतां कारुण्यहृदयां शिवाम्।**

**कल्याणजननीं नित्यां कल्याणीं प्रार्थयाम्यहम्॥**

इति सम्प्रार्थ्य तां विसृज्य प्रसादं गृहीत्वा विरमेत्। सायङ्कालेऽपि पूर्ववत् कुर्यात्।

*॥ इति तृतीयाकृत्यम् ॥*

## चतुर्थीकृत्यम्

सर्वं द्वितीयदिनवत्कृत्वा विशेषेण देव्यै मधुपर्ककज्जलतिलकादिकं समर्प्य पञ्चवर्षीयां कन्यामानीय कामाक्षीनाम्ना सम्बोध्य सम्पूज्य भोजयित्वा विशेषेण मधुपर्ककज्जलतिलकादिकं दत्त्वा प्रार्थयेत्

**ॐ अणिमादिगुणोदारामकाराद्यक्षरात्मिकाम् ।**

**अनन्तशक्तिभेदां तां कामाक्षीं पूजयाम्यहम् ॥**

इति तां विसृज्य प्रसादं गृहीत्वा विरमेत् । सायङ्कालेऽपि पूर्वोक्तमेव ।

*॥ इति चतुर्थीकृत्यम् ॥*

## पञ्चमीकृत्यम्

द्वितीयादिदिनवत्पूजादिकं सर्वं समाप्य देव्यै अङ्गरागचक्षुः समालेपनादि समर्प्य षड्वर्षीयां कन्यामानीय गायत्रीनाम्ना सम्बोध्य पूजयित्वा भोजयेत्। विशेषतोऽङ्गरागं यथाशक्त्यलङ्करणं च दत्त्वा प्रार्थयेत्

**ॐ कामचारीं महामायां कारुण्यहृदयां शिवाम् ।**

**कामदां करुणोदारां गायत्रीं पूजयाम्यहम् ॥**

इति सम्प्रार्थ्य तां विसृज्य प्रसादं गृहीत्वा विरमेत् । सायमपि पूर्ववत्कुर्यात् ।

*॥ इति पञ्चमीकृत्यम् ॥*

## षष्ठीकृत्यम्

पूजनादिकं सर्वं द्वितीयादिनवत्कृत्वा देव्यै चोलकोपवस्त्रादिकं समर्प्य सप्तवर्षीयां कन्यामानीय चण्डिकेति नाम्ना सम्बोध्य पूजयित्वा सम्भोज्य चोलकोपवस्त्रादिकं दत्त्वा प्रार्थयेत्

**ॐ चण्डवीरं चण्डमायां चण्डमुण्डप्रमर्दिनीम् ।**

**तां नमामि च देवेशीं चण्डिकां प्रार्थयाम्यहम् ॥**

इति प्रार्थयित्वा तां विसृज्य प्रसादं गृहीत्वा विरमेत् । सायङ्कालेऽपि पूर्ववत् कुर्यात् ।

## सायङ्काले बिल्वनिमन्त्रणम्

षष्ठ्यां सायङ्काले बिल्वं निमन्त्रयेत् । तत्र क्रमः

पूजासम्भारं सम्पाद्य बिल्ववृक्षसमीपं गत्वा शुचिः पूर्वाभिमुख उत्तराभिमुखो वा उपविश्याचम्य कर्मपात्रं कृत्वा कुशजलेन पूजासामग्रीमात्मानं चाभ्युक्ष्य तत्कुशादिकमादाय ॐ अद्येह मम

अस्मिन् शारदनवरात्रदुर्गापूजोत्सवाङ्गबिल्वनिमन्त्रणकर्मणि श्रीदुर्गादेवीप्रीतये बिल्ववृक्षपूजनं दुर्गापूजनं चाहं करिष्ये। इति सङ्कल्पं विधाय दीपकलशगणेशादीन् संस्थाप्य तत्पूजाविधिना सम्पूज्य रक्तवस्त्रेण मूलमाच्छाद्य तत्र **ॐ भगवति दुर्गे इहागच्छेह तिष्ठे**त्यावाहय **ॐ भगवत्यै दुर्गादेव्यै नमः** इति पाद्यादिनमस्कारान्तं सम्पूज्य । **ॐ शरणागत... ॐ जयन्ती...** इति मन्त्राभ्यां पुष्पाञ्जलिं निवेद्य बद्धाञ्जलिः पठेत्

**ॐ रावणस्य वधार्थाय रामस्यानुग्रहाय च ।**

**अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥**

**अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः ।**

**शक्रेणापि च सम्बोध्य प्राप्तं राज्यं सुरालये ॥**

**तस्मादहं त्वां प्रतिबोधयामि विभूतिराज्यप्रतिपत्तिहेतोः ।**

**यथैव रामेण हतो दशास्यस्तथैव शत्रून् विनिपातयामि ॥**

इति दुर्गां सम्बोध्य पुनः पुष्पाञ्जलिं निवेद्य पुष्पाक्षतेन बिल्ववृक्षं स्पृशन्

**ॐ मेरुमन्दरकैलाशहिमवच्छिखरे गिरौ ।**

**जातः श्रीबिल्ववृक्ष त्वमम्बिकाशिवयोः प्रियः ॥**

**श्रीशैलशिखरे जात श्रीफल श्रीनिकेतन ।**

**नेतव्योऽसि मयाऽऽगच्छ पूज्यो दुर्गास्वरूपतः ॥**

**बिल्ववृक्ष महाभाग सदा त्वं सकलप्रियः ।**

**गृहीत्वा तव शाखां वै देवीपूजां करोम्यहम् ॥**

**शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया विभो ।**

**देवैर्गृहीत्वा ते शाखां पूज्या दुर्गेति विश्रुतिः ॥**

इत्यभिमन्त्र्य **ॐ कोऽसि कतमोऽसि कस्यासि को नामासि** इति मन्त्रेण बिल्ववृक्षस्य वायव्यनैर्ऋत्यस्थिताया युग्मफलपत्रसहिताया बिल्वशाखाया मूलप्रदेशे तैलहरिद्रादिभिर्लेपयेत्। ततः गन्धाक्षतपुष्पमालादिभिः समभ्यर्च्य माषभक्तादिबलिं सम्पाद्य उपनीय गन्धाक्षतपुष्पादिकं प्रक्षिप्य सजलहस्तेनादाय **ॐ ह्रीं ह्रूं क्रीं भूतक्रूरेभ्यः स्वाहा ।**

**भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले ।**

**ते गृह्णन्तु मया दत्तं बलिमेवं प्रसाधितम् ॥**

**पूजिता गन्धपुष्पाद्यैस्तर्पिता बलिभिस्तथा ।**

**देशादस्माद्विनिःसृत्य पूजां गृह्णन्तु मत्कृताम् ॥**

इति भूमौ बलिं दत्त्वा यवसर्षपमुष्टिमादाय

**ॐ वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ।**

**अपसर्पन्तु ते सर्वे दुर्गापूजां करोम्यहम् ॥**

**ॐ फट्** । इति सप्तवारमभिमन्त्र्य दशदिक्षु विकिरेत् । ततो बिल्वशाखस्थां देवीं प्रणम्य **ॐ रक्षोहणं बलगहनम्** इति मन्त्रेण शाखामभिमृश्य रक्षां कृत्वा गृहं प्रत्यावर्त्य सायं कृत्यं पूर्ववत् कुर्यात् । इति बिल्वनिमन्त्रणविधिः ।

*॥ इति षष्ठीकृत्यम् ॥*

## सप्तमीकृत्यम्

पूजनादिकं सर्वं द्वितीयादिनवत्कृत्वा विशेषत उत्तरीयवस्त्रं देव्यै समर्प्याऽष्टवर्षीयां कन्यामानीय तां शाम्भवीनाम्ना सम्बोध्य पूजयित्वा भोजयेत् । विशेषेणोत्तरीयं वस्त्रं तस्यै दत्त्वा प्रार्थयेत्

**ॐ सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम् ।**

**सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं प्रार्थयाम्यहम् ॥**

इति सम्प्रार्थ्य तां विसृजेत् ।

## सरस्वतीपूजा

ततस्तस्मिन्नेव दिने सरस्वतीं पूजयेत् । तद्यथा

यथालाभस्थाने पुस्तकं लेखनीं मसीपात्रादिकं च संस्थाप्य कुशादीन्यादाय ॐ अद्येह मम शारदनवरात्राङ्गदुर्गापूजनोत्सवकर्मणि श्रीष्टदेवतादुर्गादेवीप्रीत्यर्थं श्रीसरस्वतीपूजनमहं करिष्ये । इति संकल्पं विधाय **'ॐ ऐं वद वद वाग्वादिनि स्वाहा' ॐ सरस्वत्यै नमः** इति मन्त्रेणासनाद्युपचारैः सम्पूज्य प्रार्थयेत्

**ॐ शुक्लां ब्रह्मविचार** ... । **ॐ या कुन्देन्दुतुषार** ... । इति सम्प्रार्थ्य प्रसादादिकं गृहीत्वा यथासुखं विरमेत् । सायमपि पूर्ववत्कुर्यात् ।

## नवपत्रिकाप्रवेशः तासां पूजा च

सप्तम्यां मध्याह्ने मूलनक्षत्रयुते केवले वा सुमुहूर्ते पूर्वदिननिमन्त्रितबिल्ववृक्षसमीपं गत्वा तरुमूले उपविश्य **ॐ दुर्गाप्रियाय बिल्ववृक्षाय नमः** । इति पुष्पाक्षतादिभिरभ्यर्च्य प्रार्थयेत्

**ॐ बिल्ववृक्ष महाभाग सदा त्वं शङ्करप्रियः ।**

**गृहीत्वा तव शाखाङ्गं दुर्गापूजां करोम्यहम् ॥**

**शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया विभो ।**

**नेतव्योऽसि मयाऽऽगच्छ पूज्यो दुर्गास्वरूपतः ॥**

इति सम्प्रार्थ्य पूर्वदिने सुपूजितां फलयुग्मसहितां शाखां सम्पूज्य

**ॐ छिन्धि २ फट् २ स्वाहा अस्त्राय नमः ।**

इति पठन् संछिद्य प्रार्थयेत्

**ॐ पुत्रायुर्धनवृद्ध्यर्थं नेष्यामि चण्डिकालये ।**

**बिल्वशाखां समाश्रित्य राज्यं लक्ष्मीं प्रयच्छ मे ॥**

**आगच्छ चण्डिके देवि सर्वकल्याणहेतवे ।**

**पूजां गृहाण सुमुखि नमस्ते शङ्करप्रिये ॥**

इति पठित्वा नवपत्रिकाः संगृह्य जलेनाभ्युक्ष्य पुष्पाक्षतैरभ्यर्च्य बिल्वशाखया सह वाद्यघोषपुरःसरं देवीगृहाङ्गणमानयेत् । नवपत्रिकानामानि यथा

**कदली दाडिमी धान्या हरिद्रा मानकं कचु ।**

**बिल्वाशोकौ जयन्ती च विज्ञेया नवपत्रिकाः ॥**

ततः किञ्चिद्दिनशेषे पुष्पदध्यक्षतगीतवाद्यघण्टाडिण्डिमखड्गकलशादिभिः शतघ्नीवाद्यघोषपुरःसरं तत्र गत्वा नवपत्रिकासहितां बिल्वशाखां त्रिः प्रदक्षिणं कृत्वा गङ्गोदकेन पञ्चगव्येन च स्नापयित्वा पुष्पाक्षतेन सम्पूज्य सुलिप्तभूमौ संस्थाप्यार्घ्यस्थापनपूर्वकं पूजयेत् । तत्र सङ्कल्पः

ॐ अद्येह अहं सपरिवारस्य मम सर्वपापसर्वशत्रुक्षयसर्वारिष्टशान्ति-सकलदारिद्र्योपशमन दीर्घायुरारोग्यैश्वर्योदयाद्यभिवृद्ध्यर्थम् आदौ दीपकलशगणेशपूजनपूर्वकं नवपत्रिकापूजनं करिष्ये ।

इति सङ्कल्पं कृत्वा यूपसमीपे दीपादीन् सम्पूज्य बिल्वशाखासहितां नवपत्रिकां च **'ॐ जयन्ती** ... ।' इति मन्त्रेण गन्धाद्युपचारैः पृथक् पृथक् पूजयेत् ।

ततः कुष्माण्डबलिं कृशरबलिं च दद्यात् । बलिदानविधिस्तु पूर्वोक्त एव । ततः **चामुण्डे चल चल चालय चालय शीघ्रं मम देवीमन्दिरे प्रवेशय पूजालये स्वाहा** इति पठन्

बिल्वशाखासहिता नवपत्रिका गृहीत्वा संचाल्य गीतवाद्यशतघ्नीघोषपूर्वकमन्तर्देवीगृहं प्रवेशयित्वा कर्मपात्रोदकेन पत्रिकाः पृथक् पृथक् स्नापयेत् । तत्र मन्त्राः

रम्भास्नाने

**ॐ दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय ।**

**रम्भारूपेण मे नित्यं शान्तिं कुरु सदा शुभे ॥**

दाडीमिस्नाने

**ॐ दाडिमि त्वं पुरा युद्धे रक्तबीजस्य सम्मुखे ।**

**उमाकार्यं कृतं यस्मात्तस्माद्दुर्गे नमोऽस्तु ते ॥**

धान्यस्नाने

**ॐ जगतः प्राणरक्षार्थं ब्रह्मणा निर्मितं पुरा ।**

**उमाप्रीतिकरं धान्यं तस्माद्रक्षतु सर्वदा ॥**

हरिद्रास्नाने

**ॐ हरिद्रे वरदे देवि उमारूपासि सुव्रते ।**

**मम विघ्नविनाशाय पूजां गृह्ण सुरोत्तमे ॥**

मानकस्नाने

**ॐ यस्य पत्रे वसेद्देवी मानवृक्ष शुचिप्रिय ।**

**मम चानुग्रहार्थाय ह्यागतासि सुरप्रिये ॥**

कचुस्नाने

**ॐ महिषासुरयुद्धेषु कच्चीभूतासि सुव्रते ।**

**मम चानुग्रहार्थाय ह्यागतासि सुरप्रिये ॥**

बिल्वस्नाने

**ॐ महादेवप्रियकरो वासुदेवप्रियः सदा ।**

**उमाप्रीतिकरो नित्यं बिल्ववृक्ष नमोऽस्तु ते ॥**

अशोकस्नाने

**ॐ हरप्रियकरो वृक्ष त्वमेकः शोकनाशनः ।**

**दुर्गाप्रीतिकरो यस्मात्तस्मात्त्वं रक्ष मां सदा ॥**

जयन्तीस्नाने

**ॐ निशुम्भशुम्भमथने सेन्द्रैर्देवगणैः सह ।**

**जयन्ति पूजयामि त्वामस्माकं वरदा भव ॥**

इति प्रत्येकं संस्नाप्य दुर्गाघटस्य समीपे भूमौ पीतवस्त्रं प्रसार्य तत्रोत्तरोत्तरक्रमेण कदल्यादिनवपत्रिकां संस्थाप्य बिल्वपत्राधिष्ठात्र्या शिवायाः पूजास्थाने युग्मफलसहितं बिल्वशाखां संस्थाप्य आसन उपविश्य कुशादीन्यादाय अद्येह मम शारदनवरात्रदुर्गापूजाङ्गत्वेन नवपत्रिकापूजनं तदधिष्ठात्रीदेवीपूजनं बिल्वे दुर्गापूजनं चाहं करिष्ये । इति सङ्कल्पं विधाय प्रत्येकं नवपत्रिकां बिल्वशाखां च गन्धादिना सम्पूज्य प्रार्थयेत्

**ॐ कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात् ।**

**आगत्य बिल्वशाखायां चण्डिके कुरु सन्निधिम् ॥**

ततः **ॐ भगवति चण्डिके इहागच्छेहतिष्ठे**त्यावाह्य '**ॐ मनो जूतिरिति**' प्राणान् प्रतिष्ठाप्य '**दक्षयज्ञविनाशिन्यै महाघोरायै योगिनीकोटिपरिवृतायै भद्रकाल्यै ह्रीं नमः**' इति पठित्वा आसनपाद्यादिनमस्कारान्तं सम्पूज्य प्रार्थयेत्

**ॐ उग्रचण्डोरुचण्डे च चण्डोग्रे चण्डनायिके ।**

**चण्डे चण्डवति चण्डे तुभ्यं चण्डि नमो नमः ॥**

**महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।**

**क्षेममारोग्यमैश्वर्यं देहि देवि प्रसीद मे ॥**

इति सम्प्रार्थ्य । ततः कदल्यां रम्भाधिष्ठात्र्यै ॐ ब्राह्म्यै नमः । दाडिम्यां दाडिम्याधिष्ठात्र्यै ॐ रक्तदन्तिकायै नमः । धान्ये धान्याधिष्ठात्र्यै ॐ लक्ष्म्यै नमः । हरिद्रायां हरिद्राधिष्ठात्र्यै ॐ दुर्गायै नमः । मानके मानकाधिष्ठात्र्यै ॐ चामुण्डायै नमः । कचौ कच्वधिष्ठात्र्यै ॐ कालिकायै नमः । बिल्वे बिल्वाधिष्ठात्र्यै ॐ शिवायै नमः । अशोके अशोकाधिष्ठात्र्यै ॐ शोकहारिण्यै नमः । जयन्त्याम् जयन्त्यधिष्ठात्र्यै ॐ कार्तिक्यै नमः । इति क्रमेण पाद्यादिषोडशोपचारैः प्रत्येकं सम्पूज्य प्रार्थयेत्

**ॐ पत्रिके नवदुर्गे त्वं महादेवमनोरमे ।**

**पूजां समस्तां सङ्गृहच रक्ष मां त्रिदशेश्वरि ॥** इति ।

**सप्तम्यामेव भद्रकालीपूजा**

ततः स्वर्णप्रतिमायां दुर्गाघटे वा **'ॐ भद्रकाल्यै नमः'** इति षोडशोपचारैः सम्पूज्य धूपदीपनैवेद्यछत्रचामरोपानहकाष्ठपादुकायष्टिपर्यङ्कादीनि समर्प्य पूर्वोक्तप्रकारेण कूष्माण्डकृशरान्नादिबलिं च समर्प्य प्रदक्षिणानीराजननमस्कारान्तं कृत्वा पुष्पाञ्जलिमादाय

**ॐ ऐं ह्रीं श्रीं नमोऽस्तुते जगद्धात्रि तथा महिषमर्दिनि ।**

**त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥**

**ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।**

**त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥** इति पुष्पाञ्जलिं समर्पयेत् ।

प्रार्थना

**ॐ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।**

**आयुरारोग्यविजयं देहि देवि नमोऽस्तु ते ॥**

**पथि देवालये दुर्गे अरण्ये प्रान्तरे जले ।**

**सर्वत्रोपगते दुर्गे नारायणि नमोऽस्तु ते ॥**

**शिरो मे सर्वदा पातु पातु कण्ठं महेश्वरि ।**

**हृदयं पातु चामुण्डा सर्वतः पातु कालिका ॥**

**देवद्वारे नदीतीरे राजद्वारे च सङ्कटे ।**

**पर्वतारोहणे दुर्गे दुर्गे रक्ष नमोऽस्तु ते ॥**

**सङ्ग्रामे विजयं देहि वरं देहि च सर्वदा ।**

**पुत्रान्देहि महाभागे दारान् दारिद्रचनाशिनि ॥**

**आन्ध्यं कुष्ठं च दारिद्र्यं रोगं शोकं च दारुणम् ।**

**बन्धुस्वजनवैराग्यं तत्सर्वं हर चण्डिके ॥**

**सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।**

**शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥**

**सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ।**

**एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥**

**सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।**

**भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥**

**जयन्ती मङ्गला काली भद्रकाली कपालिनी ।**

**दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥**

**जय त्वं देवि चामुण्डे जय भूतार्तिहारिणि ।**

**जय सर्वगते देवि कालरात्रि नमोऽस्तु ते ॥**

**दुर्गे स्मृता हरसि भीतिमशेषजन्तोः**

**स्वस्थैः स्मृता मतिमतीव शुभां ददासि ॥**

**दारिद्रचदुःखभयहारिणि का त्वदन्या**

**सर्वोपकारकरणाय सदार्द्रचित्ता ॥**

इति सम्प्रार्थ्य दण्डवत्प्रणमेत् । ततः छत्रायुधादीनि राजोपकरणादीनि सर्वाण्यपि सुसंस्कृतानि प्रोक्षितानि देवीपूजालये यथास्थानं संस्थाप्य डमरुवाद्यघण्टाघोषपुरःसरं प्रदक्षिणीकृत्य उत्थायपूर्वदिनवद्यवाङ्कुराणि परिषिच्य प्रसादं गृहीत्वा यथासुखं विहरेत् ।

*॥ इति पत्रिकाप्रवेशपूजनविधिः ॥*

## अष्टमीकृत्यम्

अथाष्टम्यां देवीपूजनं द्वितीयादिनेव सर्वं कृत्वा विशेषतो देव्यै वस्त्रं समर्प्य नववर्षीयां कन्यामानीय तां **'दुर्गा'** नाम्ना सम्बोध्य पूजां कृत्वा सम्भोज्य विशेषतो वस्त्रं दत्त्वा प्रार्थयेत्

**ॐ दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् ।**

**प्रणमामि सदा भक्त्या दुर्गां दुर्गतिनाशिनीम् ॥**

ततस्तां विसृज्य प्रसादादिकं गृहीत्वा विरमेत् ।

*॥ इत्यष्टमीकृत्यम् ॥*

## तत्राष्टमीकृत्ये कालरात्रिविधिः

अथ महाष्टम्यां रात्रौ पूजास्थानमागत्य आचम्य मूलेन प्राणानायम्य पूर्ववत् (प्रथमदिनकृत्यवत्) न्यासं विधाय **ॐ जटाजूटेति** ध्यात्वा किञ्चिन्मूलमन्त्रं जपित्वा **ॐ गुह्यातीति** जपं समर्पयेत् । ततः कुशादीन्यादाय

ॐ अद्येह अहं मम श्रीमहाकालीमहालक्ष्मीमहासरस्वतीष्टदेवतास्वरूपिणीदुर्गादेवीप्रीतिद्वारा दुर्भिक्षदारिद्रचदुःखदौर्भाग्यदुर्वृत्तनिवृत्तिसर्वपापक्षयपूर्वककल्पोक्तफलावाप्तये दुर्गापदप्राप्तये अद्य महाष्टम्यां कालरात्रिनिमित्तकपूजनं करिष्ये ।

इति सङ्कल्पं विधायार्घ्यं संस्कृत्य दीपं कलशं गणेशं ब्रह्माणं क्षेत्रपालं ग्रहांश्च सम्पूज्य ततो गन्धपुष्पादीन्यादाय दुर्गाकलशं स्पृशन्

**ॐ एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा ।**

**आवाहितासि प्रागेव सर्वकामार्थसिद्धये ॥**

**अस्यां मूर्तौ समास्थाय मम पूजां गृहाण भो ।**

**रक्षां कुरु महाभद्रे दुर्गे देवि नमोऽस्तु ते ॥**

**ॐ भगवती दुर्गे इहागच्छ इहतिष्ठ सुप्रसन्ना शुभदा वरदा भव** । इति सम्बोध्य **ॐ जयन्ती मङ्गले**ति मन्त्रेण **ॐ भगवत्यै दुर्गादेव्यै नमः** इति पाद्यादिभिः षोडशोपचारैः सम्पूज्य **ॐ हूं अम्बिकायै नवपत्रिकाभ्यस्तदधिष्ठात्रीदेवीदेवेभ्यो नमः** इति नवपत्रिकाश्च पूजयेत् ।

ततो देव्या दक्षिणतः ॐ ह्रीं जयन्त्यै नमः । एवं क्रमेण मङ्गलायै नमः । काल्यै नमः । भद्रकाल्यै नमः । कपालिन्यै नमः । दुर्गायै नमः । क्षमायै नमः । शिवायै नमः । धात्र्यै नमः । स्वाहायै नमः । स्वधायै नमः । इति **'ॐ ह्रीं'** इति बीजपूर्वकं चतुर्थ्यन्तपदेन षोडशोपचारैः सम्पूज्य देव्या वामतः **'ॐ ह्रीं'** इति बीजपूर्वकं ॐ ह्रीं उग्रदंष्ट्रायै नमः एवं सुदंष्ट्रां करालिनीं पिङ्गनेत्रां विशालाक्षीं मङ्गलां विजयां जयां च चतुर्थ्यन्तपदेन पूजयेत् ।

तथैव देव्यग्रे **'ॐ ह्रीं'** इति बीजमादितः मङ्गलां नन्दिनीं भद्रां लक्ष्मीं कीर्तिं यशस्विनीं पुष्टिं मेधां शिवां साध्वीं यशः शोभां जयां धृतिम् आनन्दां सुनन्दाम् एतांश्च चतुर्थ्यन्तपदेन पूजयेत् ।

तथैव देवीसमीपे **'ॐ ह्रीं'** बीजमादितः । जयन्तीं मङ्गलां धृतिं शान्तिं शिवां शाखां क्षमां ब्रह्माणीं कौशिकीं मतिं दुर्गां क्रियां घण्टाकर्णां कपालिनीं रौद्रीं भीमां कालीं भद्रां सिद्धिं पुष्टिम् एताश्च चतुर्थ्यन्तपदेन प्रत्येकं पूजयेत् । ततो देव्याः शिरसि

**ॐ भैरवं परमं देवं सर्वकामप्रसाधनम् ।**

**पूजयाम्यूर्ध्वतो देव्याः सर्वकामप्रसाधनम् ॥**

ॐ भैरवाय नमः । इति भैरवं पूजयेत् ।

ततः एषोऽष्टाङ्गोऽर्घ्यो **ॐ भगवत्यै दुर्गादेव्यै मया दत्तं नमः** । इत्यर्घ्यं दत्त्वा चन्दनलिप्तं बिल्वपत्रं गृहीत्वा

**ॐ अमृतोद्भवं श्रीवृक्षं महादेवप्रियं सदा ।**

**बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि** ॥ ॐ दुर्गादेव्यै नमः ।

ततो बिल्वपत्रमालामादाय

**ॐ चन्दनेन समालिप्ते कुङ्कुमेन विलेपिते ।**

**बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः** ॥

ॐ दुर्गादेव्यै नमः । इत्यर्पयेत् ।

सिंहपूजा

**ॐ ह्रौं हृः हः महाशार्दूलवितानाय पिङ्गललोचनाय नमः** ।

इति पूजयेत् ।

**देव्याः षडङ्गन्यासः**

ॐ कालीवज्रेश्वरीलोहदण्डायै स्वाहा हृदयाय नमः । ॐ कालीवज्रेश्वरीलोहदण्डायै स्वाहा शिरसे स्वाहा । ॐ कालीवज्रेश्वरीलोहदण्डायै स्वाहा शिखायै वषट् । ॐ कालीवज्रेश्वरीलोहदण्डायै स्वाहा कवचाय हुम् । ॐ कालीवज्रेश्वरीलोहदण्डायै स्वाहा नेत्राभ्यां वौषट् । ॐ कालीवज्रेश्वरीलोहदण्डायै स्वाहा अस्त्राय फट् ।

दिक्पूजा

पूर्वे ॐ ह्रां कालीवज्रेश्वरी ईशानाय नमः । दक्षिणे ॐ ह्रीं कालीवज्रेश्वरी तत्पुरुषाय नमः । पश्चिमे ॐ ह्रूं कालीवज्रेश्वरी अघोराय नमः । उत्तरे ॐ ह्रैं कालीवज्रेश्वरी सद्योजाताय नमः । मध्ये ॐ ह्रीं कालीवज्रेश्वरी वामदेवाय नमः । ॐ हृः कालीवज्रेश्वरी सर्वेभ्यो वक्त्रेभ्यो नमः । ततो देव्याः शिरसि भैरवसमीपे ॐ कालीवज्रेश्वरीलोहदण्डायै विद्याभ्यो नमः । इति पूजयेत् ।

**शस्त्रास्त्रपूजा**

पूर्वदिनत एव सम्यक्प्रक्षालितानि शस्त्रास्त्राणि यथास्थाने संस्थाप्य गन्धाद्युपचारैः पूजयेत् । हस्ते पुष्पाक्षतादीन्यादाय खड्गं स्पृष्ट्वा पठेत्

**ॐ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।**

**श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च ॥**

**इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।**

**नक्षत्रं ते कृत्तिका तु दैवतं च जनार्दनः ॥**

**पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥**

**नीलजीमूतसङ्काश तीक्ष्णदंष्ट्रकृशोदर ।**

**आश्चर्यो वर्षणश्चैव अतितेजास्तथैव च ॥**

**इयं येन धृता क्षोणी हतश्च महिषासुरः ।**

**तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥**

इति पठन् ॐ खड्गाय नमः इति पूजयेत् । एवमोङ्कारपूर्वकं ॐ त्रिशूलाय नमः । ॐ बाणाय नमः । ॐ चक्राय नमः । ॐ चर्मणे नमः । ॐ दुग्धपूर्णकलशाय नमः । ॐ छुरिकायै नमः । ॐ कट्टारकाय नमः । ॐ कुन्ताय नमः । ॐ धनुषे नमः । ॐ दुन्दुभये नमः । ॐ पताकायै नमः । ॐ ध्वजाय नमः । ॐ छत्राय नमः । ॐ शङ्खाय नमः । ॐ चामराय नमः । ॐ चर्मणे नमः ।

इति सम्पूज्य सिंहासनं पूजयेत्

**ॐ विजयो जयदो जेता रिपुजेता प्रियङ्करः ।**

**दुःखहा धर्मदः शान्तः सर्वारिष्टविनाशकः ॥**

**इत्यष्टौ तव नामानि तस्मात् सिंहपराक्रमः ।**

**तेन सिंहासनो नित्यं नाम्ना देवेषु गीयते ॥**

**त्वयि स्थितः शिवः साक्षात् त्वयि शक्रः सुरेश्वरः ।**

**त्वयि स्थितो हरिर्देवस्त्वदर्थस्तप्यते तपः ॥**

**नमस्ते सर्वतोभद्र शिवो भव महीपते ।**

**त्रैलोक्यजय सर्वस्व सिंहासन नमोऽस्तु ते ॥**

ॐ सिंहासनाय नमः । इति शस्त्रास्त्रपूजा ।

**नवदुर्गापूजा**

ततस्ताम्रपात्रेऽष्टदलोपरि पूर्वाद्यष्टदिक्षु मध्ये च कदलीपत्रे अक्षतपुञ्जेषु वा ॐ ह्रीं श्रीं इति बीजपूर्वकं पूजयेत् । यथा **ॐ ह्रीं श्रीं रुद्रचण्डायै नमः** एवमेव प्रचण्डायै नमः । चण्डोग्रायै नमः । चण्डनायिकायै नमः । चण्डायै नमः । चण्डवत्यै नमः । चण्डरूपायै नमः । चण्डिकायै नमः । उग्रचण्डायै नमः ।

ततः पत्रबाह्ये तेनैव क्रमेणाष्टावर्तेन चतुःषष्टियोगिनीः पूजयेत् ।

प्रथमावर्ते

ॐ ह्रीं श्रीं ब्रह्माण्यै नमः । एवमेव चण्डिकायै नमः । रौद्र्यै नमः । गौर्यै नमः । ऐन्द्राण्यै नमः । कौमार्यै नमः । भैरव्यै नमः । दुर्गायै नमः ।

द्वितीयावर्ते

नारसिंह्यै नमः । चामुण्डायै नमः । शिवदूत्यै नमः । वाराह्यै नमः । कौशिक्यै नमः । माहेश्वर्यै नमः । शाङ्कर्यै नमः । जयन्त्यै नमः ।

तृतीयावर्ते

सर्वमङ्गलायै नमः । काल्यै नमः । करालिन्यै नमः । मेधायै नमः । शिवायै नमः । शाकम्भर्यै नमः । शिवायै नमः । शान्तायै नमः ।

चतुर्थावर्ते

भ्रामर्यै नमः । रुद्रायै नमः । अम्बिकायै नमः । क्षमायै नमः । धात्र्यै नमः । स्वाहायै नमः । स्वधायै नमः । अर्पणायै नमः ।

पञ्चमावर्ते

मोहायै नमः । घोररूपिण्यै नमः । महाकाल्यै नमः । भद्रकाल्यै नमः । कपालिन्यै नमः । क्षेमङ्कर्यै नमः । उग्रचण्डायै नमः । चण्डोग्रायै नमः ।

षष्ठावर्ते

चण्डनायिकायै नमः । चण्डायै नमः । चण्डवत्यै नमः । महामोहाङ्घ्रिपङ्कजायै नमः । बलविकरिण्यै नमः । बलप्रमथिन्यै नमः । सर्वभूतदमन्यै नमः । उमायै नमः ।

सप्तमावर्ते

तारायै नमः । निद्रायै नमः । विजयायै नमः । जयायै नमः । शैलपुत्र्यै नमः । चण्डिकायै नमः । चण्डघण्टायै नमः । योगिन्यै नमः ।

अष्टमावर्ते

कूष्माण्डायै नमः । स्कन्दमात्रे नमः । कात्यायन्यै नमः । चन्द्रघण्टायै नमः । पारातायै नमः । भद्रायै नमः । माहेश्वर्यै नमः । कालरात्र्यै नमः ।

एताः सम्पूज्य तद्बाह्ये

पूर्वे **ॐ ह्रीं श्रीं कोटियोगिनीभ्यो नमः** । इति पूजयेत् ।

ततोऽष्टदलेषु ईशानादिक्रमेण मध्ये च पूर्वोक्तबीजपूर्वकम्

ॐ ह्रीं श्रीं ब्राह्मचै नमः । एवं माहेश्वर्यै नमः । कौमार्यै नमः । वाराह्यै नमः । नारसिंह्यै नमः । इन्द्राण्यै नमः । चामुण्डायै नमः । इति सम्पूज्य ततो देवीसन्निधाने पूर्वोक्तबीजपूर्वकं ॐ ह्रीं श्रीं जयन्त्यै नमः । एवं मङ्गलायै नमः । काल्यै नमः । भद्रकाल्यै नमः । कपालिन्यै नमः । दुर्गायै नमः । धात्र्यै नमः । स्वाहायै नमः । स्वधायै नमः । इति सम्यक् पूजयेत् ।

ततः कूष्माण्डादिबलिदानम् । तद्यथा

देव्यग्रे त्रिकोणमण्डलोपरि कूष्माण्डं संस्थाप्य जलेनाभ्युक्ष्य **ॐ कूष्माण्डबलये नमः** । इति सम्पूज्य तथैव खड्गमपि सम्प्रोक्ष्य सम्पूज्य **भो खड्ग मया पूजितोऽसि क्षमस्व** । इति संम्प्रार्थ्य कुशादीन्यादाय

ॐअद्येह अहं सैशलवनकाननभूदानजन्यफलसमफलप्राप्तिकामःश्रीदुर्गादेवीप्रीत्यर्थं कूष्माण्डाय महामहिषफलरूपाय महाद्भुतदानवाय श्रीदुर्गात्रिपुरसुन्दरीमहाकालीशाकम्भरीप्रियाय महाष्टमीनवमीसंयुताय मम सकलशत्रुदुष्टजनान् भक्षय २ प्रसादं कुरु २ इमं कूष्माण्डबलिं महिषमर्दिनीप्रीतयेऽर्पयिष्ये । भो भगवती कौशिकी कूष्माण्डबलिना आप्यायताम् । इति घण्टाडमरुवाद्यघोषपुरःसरं देव्यै समर्पयेत् ।

ततः कर्कटीक्षुदण्डमूलकबिल्वनारिकेलादिकं कुशादिसहितमादाय

ॐ अद्येह मम आयुरारोग्यैश्वर्योदयाद्यनेकविधोत्तरोत्तरहर्षविजयोदयाद्यभिवृद्धचर्थं श्रीदुर्गाभगवतीप्रीत्यर्थं बल्यर्थे इमानि कर्कटीक्षुदण्डमूलक-बिल्वनारिकेलादीनि अहमर्पयिष्ये । इत्युक्त्वा समर्पयेत् । पुनस्तथैव घृतपायसवटकलाजापृथुकसक्तुतण्डुलादीनि देव्यै समर्पयेत् ।

ततः कृशरबलिदानम् । देव्या ईशानभागे चतुष्कोणात्मकं नवकोष्ठमण्डलं विलिख्य कृशरं वामहस्ताङ्गुष्ठेन कुशादिकं दक्षहस्तेनादाय

ॐ अद्येह अहं मम श्रीदुर्गादेवीप्रीतिद्वारा नानाप्रतिबन्धनिवारणसकलाभीष्टसिद्धचर्थमिमं कृशरबलिमर्पयिष्ये । इत्युक्त्वा कुशादिकं भूमौ निःक्षिप्य लिखितनवकोष्ठके पूर्वादिक्रमेण ॐ

जयन्त्यै नमः । ॐ मङ्गलायै नमः । ॐ काल्यै नमः । ॐ भद्रकाल्यै नमः । ॐ कपालिन्यै नमः । ॐ दुर्गायै नमः । ॐ क्षमायै नमः । ॐ शिवायै नमः । ॐ धात्र्यै नमः इत्यर्पयेत् । इति बलिदानम् ।

ततो देवीगृहं गत्वा पुष्पाञ्जलिं गृहीत्वा **ॐ दुर्गे स्मृता... ॐ शरणागत... ॐ सर्वमङ्गलमाङ्गल्ये... ॐ जयन्ती...** इत्यादिमन्त्रान् पठित्वा पुष्पाञ्जलिमर्पयेत् । ततो जपस्तोत्रपाठादिकं विधाय प्रसादग्रहणं कुर्यात् ।

**होमः**

ततोऽग्निस्थापनस्थानं गत्वाऽग्निस्थापनविधिनाऽग्निं संस्थाप्य ब्राह्मणान् वृत्वा पुण्याहं वाचयित्वा दीपादीन् सम्पूज्य आघाराज्यभागौ हुत्वा पञ्चवारुणिहोमपूर्वकं गणपत्यादिवनस्पत्यन्तदेवताश्च हुत्वा पूजितदेवताभ्यो घृताहुतिपूर्वकं देव्युक्तहोमद्रव्येण चर्वादिना पायसेन वा हुत्वा दुर्गां देवीं च सप्तशतीप्रतिमन्त्रैः नवार्णमन्त्रेण सप्तशत्यष्टमाध्यायमन्त्रैर्वा होमयेत् । ततश्चतुःस्वस्त्यादिहोमशेषं समाप्य पूर्णाहुतिं हुत्वा पूर्णपात्रं विधाय ब्राह्मणेभ्यो दक्षिणां दत्त्वा शेषं कर्म समाप्य अभिषेकाशीर्वादतिलकादिकं गृहीत्वा ब्राह्मणान् भोजयित्वा सुहृद्युक्तः स्वयमपि भुञ्जीत । ततो यथासुखं विहरेत् ।

*॥ इत्यष्टमीकृत्ये कालरात्रिविधिः ॥*

**नवमीकृत्यम्**

अथ नवम्यां देवीपूजनादिकं सर्वं द्वितीयादिनवत्कृत्वा विशेषेण दुर्गायै वस्त्रं दत्वा दशवर्षीयां कन्यामानीय **'सुभद्रा'** नाम्ना सम्बोध्य पूजां कृत्वा विशेषेण वस्त्रं दत्वा सम्भोज्य प्रार्थयेत्

**ॐ सुन्दरीं स्वर्णवर्णाभां सर्वसौभाग्यदायिनीम्** ।
**सुभद्रां जननीं देवीं सुभद्रां प्रार्थयाम्यहम्** ॥

ततस्तां विसृज्य देव्या विशेषपूजां कुर्यात् ।

ततो देव्या नित्यपूजां समाप्य विशेषपूजां कुर्यात् । आचम्य प्राणानायम्य कुशादीन्यादाय ॐ अद्येह मम श्री भगवती दुर्गादेवीप्रीतिद्वारासर्वपापक्षयपूर्वकदेवीपदप्राप्त्यर्थम् अद्य महानवमीदिने दुर्गास्वरूपिणीं त्रिशूलिनीं देवीमहं पूजयिष्ये इति सङ्कल्पं विधाय महाष्टम्यां रात्रौ पूजिताष्टदलमध्ये **'ॐ ह्रीं श्रीं उग्रचण्डायै नमः'** इति सम्पूज्य पुष्पादीन्यादाय **ॐ नमो भगवति त्रिशूलिनि दुर्गे इहागच्छेह तिष्ठे**त्यावाहय **ॐ भगवतीदुर्गास्वरूपिण्यै त्रिशूलिन्यै नमः** । इति मन्त्रेण पाद्यादिभिः षोडशोपचारैः सम्पूज्य

ततोऽष्टदले पूर्वादिक्रमेण **ॐ ब्रह्माण्यै नमः । ॐ माहेश्वर्यै नमः । ॐ कौमार्यै नमः । ॐ वैष्णव्यै नमः । ॐ वाराह्यै नमः । ॐ नारसिंहचै नमः । ॐ ऐन्द्रचै नमः । ॐ शिवदूत्यै नमः** । एताः प्रत्येकं षोडशोपचारैः पूजयेत् ।

**कन्यापूजा**

सकृन्नवकुमारीपूजनप्रयोगः

पूजास्थाने उपविश्य आचम्य प्राणानायम्य कुशादीन्यादाय ॐ अद्येह अहं श्रीभगवतीदुर्गाप्रसादसिद्धिद्वारा समस्तमनोभिलषितफलावाप्तये श्रीदेवीपदप्राप्तये अद्य महानवमीदिने नवकुमारी (कुमारी) पूजनादिकं करिष्ये ।

ततोऽर्घ्यस्थापनपूर्वकं दीपं कलशं गणेशं च सम्पूज्य गन्धपुष्पाक्षतादीन्यादाय कन्यासम्मुखो भूत्वा

**ॐ चतुर्वर्गप्रदात्री त्वं चतुर्वेदप्रतिष्ठिता ।**

**प्रसीद वैष्णवि स्वस्थे मुक्तये प्रार्थयाम्यहम् ॥**

**मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् ।**

**नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥**

इत्यावाहच प्रत्येकं कुमारीणां चरणान् प्रक्षाल्य अलङ्कारैर्भूषयित्वा पाद्यादिभिः षोडशोपचारैः सम्पूज्य धूपदीपनैवेद्यद्रव्यादिकं निवेद्य **ॐ शरणागत** ... । **ॐ जयन्ती** ... इति मन्त्राभ्यां पुष्पाञ्जलिं समर्प्य नमस्कारं विधाय प्रसादग्रहणं च कृत्वा यथेच्छं भोजयेत् ।

*॥ इति कन्यापूजाविधिः ॥*

**बलिदानम्**

कूष्माण्डकर्कटीक्षुदण्डादिदानं पूर्ववत्कृत्वा नानाविधद्रव्यैः सामान्यबलिं प्रकल्प्य जलादिसहितमादाय

ॐ नमः कपालग्रहनक्षत्रसुरासुरगन्धर्वयक्षराक्षसविद्याधरगरुडमहोरगकिन्नरगजेन्द्र-देवताप्सरोगणभूतप्रेतक्रव्यादपिशाचमनुष्यमातृगणडाकिनीयोगिनीगणा इमं नानाद्रव्यबलिं गृह्णन्तु स्वाहा ।

इति दत्त्वा पठेत्

**ॐ शिवाः कङ्कालवेतालाः पूतनाजृम्भकादयः ।**

**ते सर्वे तृप्तिमायान्तु बलिदानेन तोषिताः ॥**

इति बलिदानम् ।

*॥ इति नवमीकृत्यम् ॥*

**दशमीकृत्यम्**

दशम्यां दुर्गापूजनं तु द्वितीयादिनवत् कृत्वोत्तराङ्गपूजार्घ्यनिवेदनादिकं कृत्वाऽपराजितां च सम्पूज्य विसर्जनं कुर्यात् । इति दशमीकृत्यविधिः ।

**अपराजिता पूजा**

देव्या नित्यार्चनं विधायोत्तराङ्गं च कृत्वा कुशादीन्यादाय

ॐ अद्येह मम श्रीपरमेश्वरीष्टदेवतामहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणीभगवती-दुर्गादेवीप्रीतये प्रतिपदमारभ्याद्यपर्यन्तं कृतस्य शरत्कालिकदेवीपूजनकर्मणः कल्पोक्तफलप्राप्त्यर्थमपराजिताजयाविजयादीनां पूजनं तथा एतावद्दिनपर्यन्तं स्थापितपूजितदेवीदेवानां विसर्जनं चाहं करिष्ये । इति सङ्कल्प्य न्यासं कुर्यात्

ॐ अम् अङ्गुष्ठाभ्यां नमः । ॐ पं तर्जनीभ्यां स्वाहा । ॐ रां मध्यमाभ्यां वषट् । ॐ जिम् अनामिकाभ्यां हुम् । ॐ तां कनिष्ठिकाभ्यां वौषट् । ॐ अः करतलकरपृष्ठाभ्यां फट् । इति करन्यासः ।

ॐ अं हृदयाय नमः । ॐ पं शिरसे स्वाहा । ॐ रां शिखायै वषट् । ॐ जिं कवचाय हुम् । ॐ तां नेत्रत्रयाय वौषट् । ॐ अः अस्त्राय फट् ।

इत्यङ्गन्यासः ।

ततः **ॐ फट्** इत्यर्घ्यं कर्मपात्रोदकेन संशोध्य धेनुमुद्रां प्रदर्शयेत् ।

ततः पुष्पादीन्यादाय हृदयकमलमध्ये गौरवर्णां पीतवस्त्रां सर्वाङ्गसुन्दरीं खड्गचर्मधरां व्यग्रकरां सर्वालङ्कारयुतां चतुर्भुजां त्रिनेत्रां देवीं ध्यात्वा मानसोपचारैः सम्पूज्य हृदयाद् वामनासापुटेन पुष्पाञ्जलावानीतं विभाव्य भगवतीघटमुखे सन्निधाय ॐ भगवत्यपराजिते आवाहिता सुप्रतिष्ठा भव । तथैव जयां विजयां च ध्यात्वाऽऽवाह्य ॐ जयन्ती ... । इति मन्त्रेण ॐ अपराजितायै नमः । तद्दक्षिणे ॐ जयायै नमः । वामे ॐ विजयायै नमः । तत्रैव ॐ आदित्यादिनवग्रहेभ्यो नमः । इति प्रत्येकं पाद्यादिभिः षोडशोपचारैः सम्पूज्य ततः पञ्चवर्णपताकाः पञ्च कार्पासबीजबहुतरकूष्माण्डपुष्पाणि तथा

अपराजितासोमराजीद्रोणकरवीरबिल्वरुद्रजटालोध्रपुष्पैर्देवीं यथासम्भवमभ्यर्च्य तत्परिवारान् स्वकुलदेवांश्च सम्पूज्य प्रार्थयेत्

**जय देवि जगन्मातर्जय विश्वविमोहिनि ।**

**प्रसीद मम कल्याणि वाञ्छासिद्धिकरी भव** ॥ इति ॥

ततः **ॐ दुर्गे स्मृता...** । **ॐ देवी प्रपन्नार्ति...** । **ॐ न मन्त्रं नो यन्त्रं...** । इत्यादिभिः क्षमापयेत् ।

ततः पीतवस्त्रे सर्षपमपराजितापत्रं च निधाय पोटलिकां कृत्वा कङ्कणबद्धं कारयेत् । ततः ॐ क्रियासिद्ध्यै अपराजितायै नमः । ॐ दुर्गायै नमः । इति सम्पूज्य देव्या दक्षिणभुजे बद्धं स्मरन् स्थापयेत् । ततः ॐ अः हृदयाय नमः । इति देवीं प्रदक्षिणीकृत्य शङ्खजलं भ्रामयित्वा अर्घ्यमुत्थाप्य शिरः समीपं नीत्वा भगवत्याश्चरणयुगलं स्मरन्

**ॐ गन्धाक्षतैश्च संयुक्तं फलपुष्पयुतं तव ।**

**दत्तमर्घ्यं गृहाणेदं प्रसीद परमेश्वरि** ॥

इति निवेद्य पुष्पादीन्यादाय

**ॐ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।**

**दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि** ॥

इत्यर्पयेत् ।

*॥ इति दशमीकृत्ये अपराजितापूजा ॥*

**विसर्जनम्**

पुष्पाक्षतादीन्यादाय

**ॐ दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते ।**

**संवत्सरे व्यतीते तु पुनरागमनाय वै** ॥

**ॐ उत्तिष्ठ देवि चण्डेशि शुभपूजां प्रगृह्य च ।**

**कुरुस्व मम कल्याणमष्टाभिः शक्तिभिः सह** ॥

**ॐ गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके ।**

**यत्पूजितं मया देवि परिपूर्णं तदस्तु मे** ॥

**ॐ भगवति दुर्गे गणपत्याद्यावाहितदेवीदेवाः पूजिताः स्थ क्षमध्वम्** । इत्युक्त्वा देव्या

घटोपरि पूजितदेवीदेवानामुपरि इतस्ततो निःक्षिप्य प्रणमेत् । ततो दुर्गाप्रतिमासहितं पात्रं सञ्चाल्योद्धृत्य भूमौ निदध्यात् ।

ततो घटस्थजलप्रसादादिकं नैवेद्यं यवाङ्कुराणि च किञ्चित्किञ्चिदुद्धृत्य कस्मिंश्चित्पात्रे निधाय **ॐ प्रसादग्राहिदेवेभ्यो देवीपार्षदेभ्यो भक्तेभ्यश्च इमं भगवत्या जलप्रसादादिकं समर्पयामि नमः** । इत्यर्पयेत् । इति दशमीकृत्ये विसर्जनम् ।

**अभिषेकः**

ततः स्वयं यजमानः सपरिवारान्वितो ब्राह्मणहस्तेनाभिषेकं गृह्णीयात् ।

तत्र मन्त्राः

**ॐ सुरास्त्वामभिषिञ्चन्तु...** । **ॐ देवस्य त्वा...** । **ॐ द्यौ शान्तिः...** । **ॐ तच्चक्षुः...** । **ॐ स्वस्तिनः...** । **ॐ विश्वानि देव...** । **ॐ रोगानशेषा...** । **ॐ शूलेन पाहि...** । इत्यादिभिः पौराणिकैर्वैदिकैश्च मन्त्रैरभिषेकं गृहीत्वा वस्त्रभूषणानि धारयेत् इति दशमीकृत्ये अभिषेकः ।

**प्रसादग्रणम्**

ततो ब्राह्मणाः हस्ते प्रसादादिकं गृहीत्वाऽऽशीर्वादमन्त्रान् पठेयुः

**ॐ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूरऽइषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥**

**दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् । अथो त्वन्दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥**

**पुनस्त्वादित्या रुद्रा वसवः समिन्धताम् । पुनर्ब्रह्माणो वसुनीथ यज्ञैः घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥**

**जयन्ती मङ्गला काली भद्रकाली कपालिनी ।**

**दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥**

**ॐ श्रीर्वर्चस्वमायुष्यमारोग्यमाभिधात्पवमानं महीयते ।**

**धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥**

**ॐ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।**

**शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥**

**अव्याधिना शरीरेण मनसा च निराधिना ।**

**पूरयन्नर्थिनामाशास्त्वं जीव शरदां शतम् ॥**

**आयुर्द्रोणसुते श्रियो दशरथे शत्रुक्षयो राघवे**

**ऐश्वर्यं नहुषे गतिश्च पवने मानं च दुर्योधने ।**

**शौर्यं शान्तनवे बलं हलधरे सत्यं च कुन्तीसुते**

**विज्ञानं विदुरे भवन्तु भवतां कीर्तिश्च नारायणे ॥**

**भद्रमस्तु शिवं चास्तु महालक्ष्मीः प्रसीदतु ।**

**तुष्यन्तु त्वां सदा देवाः सम्पदः सन्तु सुस्थिराः ॥**

इत्यादि मन्त्रान्ते प्रसादं गृह्णीयात् । इति प्रसादग्रहणम् ।

इति दशमीकृत्यम् ।

*॥ इति दुर्गापूजा ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| वासन्तिकनवरात्रम् | = | वसन्त ऋतुमा पर्ने चैत्रको नवरात्रि |
| शतावृत्तिः | = | एक सय आवृत्ति, सय पटक दोहोऱ्याउनु |
| घटः | = | कलश वा माटाको घडा |
| नक्तभोजी | = | रात्रिमा मात्र भोजन गर्ने व्रत |
| प्ररोहणसमर्थान् | = | उम्रन सक्ने खालका |
| यवरोपणम् | = | जमरा (जौ) रोप्ने कार्य |
| अङ्कुरिष्यमाणेभ्यः | = | उम्रनेवाला जौहरू |
| कर्कटः | = | काँक्रो |
| पृथुकः | = | चिउरा |
| प्रतिबन्धः | = | विघ्नबाधा |
| पूर्वादिदक्षिणावर्तक्रमेण | = | पूर्वदेखि प्रारम्भ गरेर दाहिने घुम्ने क्रमले |

## अभ्यासार्थाः प्रश्नाः

**१. नवरात्रा कति सङ्ख्यकाः सन्ति ?**

**२. कस्यां तिथौ नवरात्रारम्भो भवति ?**

**३. दुर्गापूजाया यन्त्रं लिखत ?**

**४. यववपनमन्त्रः कः ?**

**५. कूष्माण्डबलिदानभूमौ किं लिख्यते ?**

**६. कृसरबलिदानभूमौ किं लिख्यते ?**

**७. बिल्वनिमन्त्रणं कस्मिन्दिने क्रियते ?**

**८. नवपत्रिकाणां नामानि लिखत ?**

**९. अपराजिताया पूजा कस्मिन्दिने कुत्र क्रियते ?**

**१०. कन्यापूजने कुमारीनाम्नी कन्यायाः पूजनं कस्मिन्दिने भवति ?**

**११. दुर्गाया आराधनया के के प्राप्यन्ते ?**

**१२. दुर्गायाः ॐ विद्युद्दामसमप्रभां० नामकं ध्यानमन्त्रं लिखत ।**

**१३. दुर्गादेव्याः प्राणप्रतिष्ठासम्पादनाय बीजादिसहितं मन्त्रस्वरूपं लिखत ।**

**१४. कूष्माण्डबलिदानस्य सङ्कल्पं रचयत ।**

**१५. आयुर्द्रोणसुते श्रियो दशरथे० इति समग्रस्य मन्त्रस्य अर्थं लिखत ।**

**१६ शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

नवपत्रिका, कूष्माण्डम्, घटस्थापना, निमन्त्रणम्, कालरात्रिः, नवकन्या, कल्याणी, शार्दूलः, खड्गः, दुन्दुभिः, पताका

**१७. पाठाधारेण रिक्तस्थानं पूरयत**

(क) ॐ जटाजूटसमायुक्तामर्धेन्दुकृतशेखराम् ।

.................... पूर्णेन्दुसदृशाननाम् ॥

(ख) ॐ या देवी मधुकैटभप्रमथिनी .......... ।

.................... या रक्तबीजाशनी ॥

(ग) शक्तिः शुम्भनिशुम्भदैत्यदलनी .......... ।

.................... मां पातु विश्वेश्वरी ॥

(घ) कदली दाडिमी धान्या .................... ।

.................... च विज्ञेया नवपत्रिकाः ॥

(ङ) ॐ पत्रिके नवदुर्गे त्वं .................... ।

.................... रक्ष भो त्रिदशेश्वरि ॥

## प्रयोगाभ्यासः

१. दुर्गापूजनाय प्रथमदिनतः दशमदिनपर्यन्तानां सामग्रीणां सूचिं सङ्कलनं कृत्वा दिनविशेषकृत्यनामानि च लिखत ।

२. शिक्षकसहयोगेन श्यामपट्टिकायां दुर्गायन्त्रनिर्माणं कुरुत ।

३. दुर्गादेव्याः ध्यानमन्त्राः पुष्पाञ्जलिमन्त्राश्च ह्रस्वदीर्घसहितं शुद्धोच्चारणाय प्रयत्नो विधातव्यः ।

४. नवपत्रिकाणां परिचयाय शिक्षकसहायेन स्वरूपज्ञानं कुरुत ।

५. दुर्गादेव्याः चित्रं तथा खड्ग-त्रिशूल-बाण-चक्र-दुग्धपूर्णकलश-छुरिका-कट्टारक-कुन्त-धनु-दुन्दुभि-पताका-ध्वजा-छत्र-शङ्ख-चामरादीनामायुधानां स्वरूपाणि च व्यरचयत ।

सप्तमः पाठः

# लक्ष्मीपूजा (दीपावली)

## महत्त्वम्

सामान्यतया यमपञ्चकस्य तृतीयदिवसे लक्ष्मीपूजा भवति । अमावास्यातिथिमाध्यमेनास्या निर्णयो विधीयते । दुःखदारिद्रयदौर्भाग्याद्यपसारणाय निशीथोत्तरं नगरे स्त्रीभिः डिण्डिमघोषेण शूर्पसंताडितघोषेण च अलक्ष्मीनिस्सारणं कुर्वन्ति । स्थिरलक्ष्मीप्राप्तये प्राप्तलक्ष्मीचिरकालपर्यन्तं स्थापनार्थं व्यापारादिस्वकार्ये धनधान्यादिवृद्धये सर्वाभ्युदयप्राप्तये च सम्भवे सति स्वातीनक्षत्रयुतदिने लक्ष्मीपूजा क्रियते । अस्याः पूजायाः प्रधानदेवता लक्ष्मीदेवी । अत्र विशेषरूपेण दीपमालिकापूजा लक्ष्मीपूजा कुबेरपूजा लेखनीपुस्तकादीनां च पूजा भवति । रात्रौ लक्ष्मीसूक्तं दुर्गापाठादिकं च कृत्वा जागरणादिना उल्काप्रक्षेपणादिना च व्यतीयते ।

### पूजाविधिः

कार्तिककृष्णामावास्यायां व्रतं कृत्वा सायङ्काले पूजासामग्रीं सम्पाद्य कर्मपात्रं निर्माय प्रतिज्ञासङ्कल्पं कृत्वा व्रतं चरेत् ।

### प्रतिज्ञासङ्कल्पः

मासादीन्नुल्लिख्य पूर्वसङ्कल्पसिद्धिस्तु .... अहं मम सर्वोपद्रवरोगशोकभयनिन्दादि- निरसनपूर्वकम् अप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्म्याः चिरकालपर्यन्तं संरक्षणार्थं प्रचलितकृषिवाणिज्ये व्यापारे व्यवसाये सर्वकारस्य सेवाकार्ये पठनपाठने च बहुलाभार्थं सर्वेषु परिवारेषु रोगनिरसनपूर्वकमारोग्यताप्राप्तये बहुधनलाभार्थं श्रीमहालक्ष्मीप्रीतये दीपकलशगणेशादिदेवानां पूजनपूर्वकं महालक्ष्मीकुबेरलेखन्यादिदेवानाञ्च पूजनमहं करिष्ये । तत्रादौ ब्राह्मणवरणं पुण्याहवाचनञ्चाहं करिष्ये । ततो दीपादिमण्डपस्थदेवान् सम्पूजयेत् ।

### पूजासामग्री

पूजा सामग्री १ भाग, दीप, कलश, गणेश, गुड (सख्खर), धनिया, सेतो फूल, अक्षता, सौभाग्य सामग्री, दुबो, सुगन्धित माला, तेल, पान मसला, जलदार नरिवल, नयाँ कलम, मसीदानी, खाता, धानको लावा आदि ।

### अथ लक्ष्मीपूजाविधिः

ताम्रस्थाल्यां प्रतिमायां लक्ष्म्याः पूजनं कार्यम् । सम्पादितमण्डपे लक्ष्मीमूर्तौ प्रतिमायां वा

प्राणान् प्रतिष्ठापयेत् । ततो ध्यानं कुर्यात् ।

ध्यानम्

**ॐ या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी**

**गम्भीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।**

**या लक्ष्मीर्दिव्यरूपैर्मणिगणखचितैः स्नापिता हेमकुम्भैः**

**सा नित्यं पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥**

श्रीमहालक्ष्म्यै नमः । ध्यानं समर्पयामि ।

आवाहनम्

**सर्वलोकस्य जननीं सर्वसौख्यप्रदायिनीम् ।**

**सर्वदेवस्वरूपां तां देवीमावाहयाम्यहम् ॥**

श्रीमहालक्ष्म्यै नमः । आवाहनं समर्पयामि ।

आसनम्

**ॐ तप्तकाञ्चनवर्णाभां मुक्तामणिविराजिताम् ।**

**निर्मलं कोमलं दिव्यमासनं प्रतिगृह्यताम् ॥**

श्रीमहालक्ष्म्यै नमः । आसनं समर्पयामि ।

पाद्यजलम्

**ॐ गङ्गादितीर्थसम्भूतं गन्धपुष्पाक्षतैर्युतम् ।**

**पाद्यं ददाम्यहं देवि महालक्ष्मि ! नमोऽस्तु ते ॥**

श्रीमहालक्ष्म्यै नमः । पाद्यजलं समर्पयामि ।

अर्घ्यम्

**ॐ सर्वगन्धसमायुक्तं दधिदूर्वासमन्वितम् ।**

**अर्घ्यं गृहाण जननि महालक्ष्मि नमोऽस्तु ते ॥**

श्रीमहालक्ष्म्यै नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ सर्वलोकस्य या लक्ष्मीः ब्रह्मविष्ण्वादिभिस्तुता ।**

**ददाम्याचमनं तस्यै महालक्ष्म्यै नमो नमः ॥**

श्रीमहालक्ष्म्यै नमः । आचमनीयं समर्पयामि ।

स्नानीयम्

**ॐ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।**

**स्नापितासि मया देवि ततः शान्तिं प्रयच्छ मे ॥**

श्रीमहालक्ष्म्यै नमः । स्नानीयं समर्पयामि ।

पञ्चामृतस्नानम्

**ॐ दधिमधुघृतञ्चैव पयश्च शर्करायुतम् ।**

**पञ्चामृतं समानीतं स्नानार्थं प्रतिगृह्यताम् ॥**

श्रीमहालक्ष्म्यै नमः । पञ्चामृतस्नानं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ।**

**तदिदं कल्पितं तुभ्यं शुद्धस्नानार्थमेव च ॥**

श्रीमहालक्ष्म्यै नमः । शुद्धोदकस्नानं समर्पयामि ।

वस्त्रम्

**ॐ सुवर्णतन्तुभिर्युक्तं क्षौमं त्वतिमनोहरम् ।**

**मया निवेदितं देवि परिधत्स्व यथासुखम् ॥**

श्रीमहालक्ष्म्यै नमः । वस्त्रं समर्पयामि ।

आभूषणम्

**ॐ रत्नकङ्कणवैदूर्यमुक्ताहारयुतानि च ।**

**निवेदितानि ते देवि ! स्वीकुरुष्व महेश्वरि ॥**

श्रीमहालक्ष्म्यै नमः । आभूषणं समर्पयामि ।

चन्दनम्

**ॐ श्रीखण्डागरुकर्पूरमृगनाभिसमन्वितम् ।**

**विलेपनार्थं ते देवि चन्दनं प्रतिगृह्यताम् ॥**

श्रीमहालक्ष्म्यै नमः। चन्दनं समर्पयामि।

रक्तचन्दनम्/सिन्दूरम्

**ॐ रक्तचन्दनसिन्दूरे तिलकार्थे नियोजितम्।**

**निवेदितं मया देवि भालशोभास्तु ते सदा॥**

श्रीमहालक्ष्म्यै नमः। रक्तचन्दनं सिन्दूरं च समर्पयामि।

कुङ्कुमम्

**ॐ कुङ्कुमं कामदं दिव्यं शोभावृद्धिकरं परम्।**

**प्रमोदबर्द्धनं नित्यं कुङ्कुमं प्रतिगृह्यताम्॥**

श्रीमहालक्ष्म्यै नमः। कुङ्कुमं समर्पयामि।

सुगन्धितैलम्

**ॐ तैलानि च सुगन्धीनि द्रव्याणि विविधानि च।**

**मयाऽऽनीतानि लेपार्थं गृहाण परमेश्वरि !॥**

श्रीमहालक्ष्म्यै नमः। विविधं सुगन्धितैलं समर्पयामि।

अक्षताः

**ॐ अक्षताश्च सुरश्रेष्ठा ! कुंकुमाक्ताः सुशोभिताः।**

**मया निवेदिता भक्त्या पूजार्थं प्रतिगृह्यताम्॥**

श्रीमहालक्ष्म्यै नमः। अक्षतान् समर्पयामि।

पुष्पमाला

**ॐ मालती-मल्लिका-पुष्पैः श्वेतरक्तैश्च रञ्जिता।**

**मया संग्रथिता माला गृह्यतां जगदीश्वरि॥**

श्रीमहालक्ष्म्यै नमः। पुष्पमालां समर्पयामि।

नानाविधपुष्पाणि

**ॐ पद्मशङ्खजपापुष्पैः शतपत्रैश्च सङ्कुलम्।**

**सुरभिगन्धसंयुक्तं पुष्पाणि प्रतिगृह्यताम्॥**

श्रीमहालक्ष्म्यै नमः । नानाविधानि पुष्पाणि समर्पयामि ।

अथाङ्गपूजा

ॐ चपलायै नमः । पादौ पूजयामि ।

ॐ चञ्चलायै नमः । जानुनी पूजयामि ।

ॐ कमलायै नमः । कटिं पूजयामि ।

ॐ कात्यायन्यै नमः । नाभिं पूजयामि ।

ॐ जगन्मात्रे नमः । जठरं पूजयामि ।

ॐ कमलवासिन्यै नमः । नेत्रत्रयं पूजयामि ।

ॐ श्रियै नमः । शिरः पूजयामि । इत्यङ्गपूजा ।

अष्टसिद्धिपूजा

| | |
|---|---|
| पूर्वे | ॐ अणिम्ने नमः पूजयामि । |
| आग्नेये | ॐ महिम्ने नमः पूजयामि । |
| दक्षिणे | ॐ गरिम्णे नमः पूजयामि । |
| नैर्ऋत्ये | ॐ लघिम्ने नमः पूजयामि । |
| पश्चिमे | ॐ प्राप्त्यै नमः पूजयामि । |
| वायव्ये | ॐ प्राकाम्यै नमः पूजयामि । |
| उत्तरे | ॐ ईशितायै नमः पूजयामि । |
| ईशाने | ॐ वशितायै नमः पूजयामि । इत्यष्टसिद्धिपूजा । |

पुनः अष्टलक्ष्मीपूजा

| | |
|---|---|
| पूर्वे | ॐ आद्यलक्ष्म्यै नमः पूजयामि । |
| आग्नेये | ॐ विद्यालक्ष्म्यै नमः पूजयामि । |
| दक्षिणे | ॐ सौभाग्यलक्ष्म्यै नमः पूजयामि । |
| नैर्ऋत्ये | ॐ अमृतलक्ष्म्यै नमः पूजयामि । |
| पश्चिमे | ॐ कमललक्ष्म्यै नमः पूजयामि । |

वायव्ये ॐ सत्यलक्ष्म्यै नमः पूजयामि ।

उत्तरे ॐ भोगलक्ष्म्यै नमः पूजयामि ।

ईशाने ॐ योगलक्ष्म्यै नमः पूजयामि । इत्यावरणपूजा ।

अथ धूपः

**ॐ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

श्रीमहालक्ष्म्यै नमः । धूपमाघ्रापयामि ।

दीपः

**ॐ कर्पूरवर्तिसंयुक्तं घृतयुक्तं मनोहरम् ।**

**दीपं गृहाण जननि त्रैलोक्यतिमिरापहम् ॥**

श्रीमहालक्ष्म्यै नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ नैवेद्यं गृह्यतां देवि भक्ष्यभोज्यसमन्वितम् ।**

**षड्रसादिभिः संयुक्तं महालक्ष्मि नमोऽस्तु ते ॥**

श्रीमहालक्ष्म्यै नमः । नैवेद्यं निवेदयामि ।

नैवेद्यान्ते पानीयम्

**ॐ शीतलं निर्मलं तोयं कर्पूरेण सुवासितम् ।**

**आचम्यतां जलं ह्येतत्प्रसीद परमेश्वरि ॥**

श्रीमहालक्ष्म्यै नमः । पानीयं समर्पयामि ।

फलम्

**ॐ फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ।**

**तस्मात्फलप्रदानेन पूर्णाः सन्तु मनोरथाः ॥**

श्रीमहालक्ष्म्यै नमः । फलं समर्पयामि ।

ताम्बूलम्

**ॐ एलालवङ्गकर्पूरनागवल्लीदलैर्युतम् ।**

**पूगीफलसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

श्रीमहालक्ष्म्यै नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

श्रीमहालक्ष्म्यै नमः । दक्षिणां समर्पयामि ।

नीराजनम्

**ॐ चक्षुदं सर्वलोकानां तिमिरस्य निवारणम् ।**

**कर्पूरवर्त्तिसंयुक्तं दीपं देवि प्रगृह्यताम् ॥**

श्रीमहालक्ष्म्यै नमः । नीराजनं समर्पयामि ।

पुष्पाञ्जलिः

**ॐ केतकीजातिकुसुमैर्मल्लिकामालतीभवैः ।**

**पुष्पाञ्जलिर्मया दत्तस्तत्र प्रीत्यर्थमेव च ॥**

श्रीमहालक्ष्म्यै नमः । पुष्पाञ्जलिं समर्पयामि ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि तानि प्रणश्यन्तु प्रदक्षिणपदे पदे ॥**

**ॐ सुरासुरेन्द्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादपंकजम् ।**

**परावरं पातु वरं सुमङ्गलं नमामि भक्त्याऽखिलकामसिद्धये ॥**

**ॐ भवानि त्वं महालक्ष्मीः सर्वकामप्रदायिनी ।**

**सुपूजिता प्रसन्ना स्यान्महालक्ष्मि ! नमोऽस्तु ते ॥**

**ॐ नमस्ते सर्वदेवानां वरदाऽसि हरिप्रिये ।**

**या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥**

श्रीमहालक्ष्म्यै नमः । प्रदक्षिणां समर्पयामि ।

*॥ इति लक्ष्मीपूजा ॥*

**मषीलेखनीपूजा (व्यापारक्षेत्रे)**

मषीलेखन्योः ध्यानम्

**ॐ सद्यश्छिन्नशिरः कृपाणमभयं हस्तैर्वरं बिभ्रतीं**

**घोरास्यां शिरसां स्रजं सुरुचिरामुन्मुक्तकेशावलीम् ।**

**सृक्कासृक्प्रवहां श्मशाननिलयां श्रुत्योः शवाऽलंकृतां**

**श्यामाङ्गीकृतमेखलां शवकरैर्देवीं भजे कालिकाम् ॥**

ध्यानं समर्पयामि । श्रीमहाकाल्यै नमः ॥

मषीपूजा

**ॐ मषी त्वं लेखनीयुक्ता चित्रगुप्ताशयस्थिताम् ।**

**सदक्षराणां पत्रेषु लेख्यं कुरु सदा मम ॥**

लेखनीपूजा

**ॐ कृष्णानने द्विजिह्वे च चित्रगुप्तकरे स्थिता ।**

**सदक्षराणां पत्रेषु लेख्यं कुरु सदा मम ॥** ॐ लेखन्यै नमः । कठिन्यै नमः ॥

धूपदीपनैवेद्यादीनि समर्प्य

**ॐ या कालिका रोगहरा सुवन्द्या भक्तैः समस्तैर्व्यवहारदक्षैः ।**

**जनैर्जनानां भयहारिणी च सा लोकमाता मम सौख्यदाऽस्तु ॥**

**कृष्णानने द्विजिह्वे च चित्रगुप्तकरे स्थिता ।**

**सदक्षराणां पत्रेषु लेख्यं कुरु सदा मम ॥** इति ॥

ततः आर्थिकव्यवहाराय स्थूलपुस्तिकासु (वहीखाता) दक्षिणावर्तं प्रत्येकेषु स्वस्तिकं कृत्वा पूजयेत् । थैल्यादिषु द्रव्यस्थापितमञ्जुषायां वा हरिद्राचन्दनकमलगट्टादूर्वाद्रव्यादिकं संस्थाप्य ध्यानपूर्वकं तत्र पूजयेत् ।

तत्र ध्यानम्

**ॐ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं**

**वीणापुस्तकधारिणीमभयदां जाडयान्धकारापहाम् ॥**

**हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थिताम्**

**वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥** ॐ श्रीसरस्वत्यै नमः ध्यायामि ।

ॐ श्रीसरस्वत्यै नमः । इति नाममन्त्रेणैव षोडशोपचारैः सम्पूजयेत् ।

ततः प्रार्थना

**ॐ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता**

**या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।**

**या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता**

**सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा** ॥ इति सरस्वतीपूजा ।

**अथ कुवेरपूजा**

कुवेरध्यानम्

**ॐ धनाध्यक्षाय देवाय नरयानोपवेशिने** ।

**नमस्ते राजराजाय कुबेराय महात्मने** ॥ ॐ कुबेराय नमः ।

तूलापूजा

**ॐ नमस्ते सर्वदेवानां साक्षित्वे सत्यमाश्रिता** ।

**साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना** ॥ ॐ तुलायै नमः ॥ इति तुलादिपूजा ॥

**अथ दीपमालिका**

न्यूनेऽपि एकादश एकविंशति वा दीपा स्युः । दीपपूजनविधिना दीपान् सम्पूज्य प्रार्थयेत् ।

**ॐ भो दीप ब्रह्मरूपस्त्वं ह्यन्धकारविनाशक** ।

**इमां मया कृतां पूजां गृह्णन् तेजः प्रवर्धय** ॥ ॐ दीपेभ्यो नमः प्रार्थयामि ।

नमस्कारः

**ॐ दीपावलीं मया दत्तां गृहाण त्वं सुरेश्वरि** ।

**अनेन दीपदानेन ज्ञानदृष्टिप्रदा भव** ॥ ॐ दीपमालिकायै नमः नमस्करोमि ।

आरार्तिक्यम्

**ॐ अग्निर्ज्योतीरविर्ज्योतिश्चन्द्रज्योतिस्तथैव च** ।

**उत्तमः सर्वज्योतीनाम् आरार्तिक्यं प्रगृह्यताम्** ॥

**ॐ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्** ।

**सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि** ॥

मन्त्रपुष्पाञ्जलिः

**ॐ यज्ञेन यज्ञमयजन्तदेवास्तानि धर्म्माणि प्प्रथमान्यासन्।**

**ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे साद्ध्याः सन्ति देवाः॥**

**ॐ राजाधिराजाय प्रसह्यसाहिने**

**नमो वयं वैश्रवणाय कुर्महे।**

**स मे कामान् कामकामाय मह्यं**

**कामेश्वरो वैश्रवणो ददातु॥**

कुवेराय वैश्रवणाय महाराजाय नमः।

ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्, सार्वभौमः सार्वायुष आन्तादापरार्धात्। पृथिव्यै समुद्रऽपर्यन्ताया एकराडिति। तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे। आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति।

ॐ व्विश्श्वतश्च्चक्क्षुरुत व्विश्श्वतो मुखो व्विश्श्वतो बाहुरुत व्विश्श्वतस्प्पात्। सम्बाहुब्भ्यान्धमति सम्पतत्त्रैद्द्यावा भूमी जनयन्देवऽएकः॥

**सेवन्तिका-बकुल-चम्पक-पाटलाब्जै-पुन्नाग-जाति-करवीर-रसालपुष्पैः।**

**बिल्व-प्रवाल-तुलसीदल-मञ्जरीभिस्त्वां पूजयामि जगदीश्वरि मे प्रसीद॥**

**नमस्ते सर्वदेवानां वरदासि हरिप्रिये।**

**या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात्॥**

**दामोदरि नमस्तेऽस्तु नमस्त्रैलोक्यमातृके।**

**नमस्तेऽस्तु महालक्ष्मि त्राहि मां परमेश्वरि॥**

**शङ्खचक्रगदाहस्ते शुभ्रवर्णे शुभानने।**

**ममाऽभीष्टवरं देहि सर्वसिद्धिप्रदायिनि।**

**नमस्तेऽतु महालक्ष्मि महासौख्यप्रदायिनि।**

**सर्वदा देहि मे द्रव्यं दानाय मुक्तिहेतवे॥**

**धनं धान्यं धरां कीर्तिं धर्ममायुर्यशः श्रियम्।**

**तुरगान् हस्तिनः पुत्रान् महालक्ष्मि प्रयच्छ मे॥**

ॐ दीपमालिकायै नमः। मन्त्रपुष्पाञ्जलिं समर्पयामि।

विशेषार्घ्यदानम्

**ॐ साधनमिहलोकस्य सिद्धिदा सार्वकामिकम् ।**

**परलोकस्य साध्या त्वं गृहाणार्घ्यं नमोऽस्तु ते ॥**

एवं दक्षिणादिकं ब्राह्मणेभ्यो दत्त्वा रात्रौ जागरणं कृत्वा विसर्जनं प्रसादग्रहणं च कुर्यात् ।

*॥ इति लक्ष्मीव्रतपूजाविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| दुःखदारिद्र्याद्यपसारणाय | = | दुःख कष्ट दरिद्रता आदि हटाउन |
| निशीथोत्तरम् | = | मध्यरातपछि |
| नगरस्त्रीभिः | = | सहरका स्त्रीहरूले |
| शूर्पसंताडितघोषेण | = | नाङ्लो ठटाएर |
| सर्वाभ्युदयप्राप्तये | = | सबै प्रकारको उन्नति प्रगति प्राप्तिका लागि |
| डिंडिंघोषेण | = | डिं डिं का आवाजले, नाङ्लो ठटाएर |
| उल्काप्रक्षेपणम् | = | पटाका पड्काउनु |

## अभ्यासार्थाः प्रश्नाः

१. **यमपञ्चकस्य कस्मिन्दिने लक्ष्मीपूजा भवति ?**

२. **अत्र प्रधानदेवः कोऽस्ति ?**

३. **अत्र विशेषरूपेण कानि कानि कर्माणि क्रियन्ते ?**

४. **लक्ष्मीपूजनात् किं किं लभ्यते ?**

५. **लक्ष्मीपूजादिवसे अन्येषां केषां देवानां पूजनं भवति ?**

६. **लक्ष्मीपूजायाः महत्त्वं प्रदर्शयत ।**

७. **लक्ष्मीपूजायाः ध्यानमन्त्रं लिखत ।**

८. **लक्ष्मीपूजायाः प्रतिज्ञासङ्कल्पवाक्यस्वरूपं प्रदर्शयत ।**

९. **रात्रिं कथं व्यतीयते ? तल्लिखत ।**

१०. **लक्ष्मीपूजायाः मध्यरात्रिकृत्यं लिखत ।**

**११. अधस्तान् शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

अपसारणम्, अलक्ष्मीः, निशीथः, दीपमालिका, कुबेरः

**१२. पाठाधारेण रिक्तस्थानं पूरयत**

(क) ॐ मषी त्वं लेखनीयुक्ता ................ ।
.................... लेख्यं कुरु सदा मम ॥

(ख) ॐ .................... चित्रगुप्तकरे स्थिता ।
सदक्षराणां पत्रेषु .................... ॥

(ग) ॐ धनाध्यक्षाय देवाय नरयानोपवेशिने ।
नमस्ते राजराजाय .................... ॥

(घ) ॐ नमस्ते सर्वदेवानां .................... ।
.................... निर्मिता विश्वयोनिना ॥

(ङ) ॐ .................... ह्यन्धकारविनाशक ।
इमां मया कृतां पूजां .................... ॥

**प्रयोगाभ्यासः**

१. लक्ष्मीपूजने अन्येषां देवानां च पूजनमन्त्रान् सम्यक् उच्चारणं कुरुत ।
२. लक्ष्मीध्यानमन्त्रं कण्ठस्थं कृत्वा सस्वरेण श्रावयत ।
३. विद्यार्थिन एव परस्परम् आचार्ययजमानौ कल्पयित्वा लक्ष्मीपूजाया आयोजनं कुरुत ।
४. स्वगृहे कृताया लक्ष्मीपूजाया ज्ञानं शिक्षकसहयोगेन परस्परं श्रावयत ।
५. लक्ष्मीपूजायाः स्थानविशेषेण भिन्नता अस्ति न वा ? अभिभावकैः सह विचारविमर्शं कुरुत ।

अष्टमः पाठः

# विश्वकर्मदेवतापूजाविधिः

## महत्त्वम्

विश्वकर्मास्माकं धातुमयपात्राणां यन्त्राणां यानानां वाहनानां सर्वेषामपि निर्माता देवोऽस्ति । विश्वकर्मदेवो देवताया अपि परमनिर्माणगुरवः सन्ति । स्वर्णरजतताम्रलौहपित्तलादीनां सर्वेषामपि धातुमयपात्राणां कर्तृत्वेन कर्माधिकारिदेवत्वेन स गृह्यते । तेन हि धातुमयपात्रस्य देवो विश्वकर्मा । गृहवास्तुनिर्माणकर्ता बलशाली पराक्रमी शिल्पविद्याविशाराद्यनेकगुणसम्पन्नदेवो विश्वकर्मैवास्ति । तस्य पूजा विशेषतो वैक्रमाब्दमानेन आश्विनमासस्य प्रथमदिवसे आश्विनशुक्लमहानवम्यां च भवति । तेषां पूजनेन वर्षपर्यन्तं धातूत्पन्नभयं यानदुर्घटनादिकं च न भवतीति जनविश्वासो वर्तते । वाहनवाहका वाहनारोहणसमये कुलदेवं स्वेष्टदेवं विश्वकर्माणञ्च प्रणम्यैव वाहनं परिचालयन्ति ।

## पूजाविधिः

आश्विनसङ्क्रान्तौ महानवम्याम् अन्यदिने वा विश्वकर्मणः पूजावसरे पूजासामग्रीं संस्थाप्य वाहनं च सम्प्रक्षाल्य विश्वकर्मणः मूर्तिं मण्डपं च सञ्जीकृत्य कर्मपात्रं विधाय व्रती प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

ॐ पूर्वसङ्कल्पसिद्धिरस्तु अद्येह गोत्रोत्पन्नः शर्माहं मम आयुरारोग्यैश्वर्यधनधान्या-भिवृध्यर्थम् उत्तरोत्तरवाहनयानवाष्पयानवातयानादीनां वा सुखोपभोगप्राप्त्यर्थम् अकालमृत्यु-अपमृत्यु-निवारणपूर्वकं समस्तयानवाहनसुखप्राप्त्यर्थं श्रीपरमेश्वर-विश्वकर्मदेवप्रीत्यर्थं यथासम्पादितोपचारैः यथाज्ञानेन च श्रीविश्वकर्मदेवतापूजनमहं करिष्ये । तत्रादौ दीपकलशगणेशादीनामन्येषां च मण्डपस्थदेवानां पूजनमहं करिष्ये । इति सङ्कल्प्य तान् सम्पूज्य च व्रतं पूजनं च चरेत् ।

## पूजासामग्री

विश्वकर्माको सुनको प्रतिमा १, विश्वकर्माको चित्र, थाली, कलश, तिल, पूजासामग्री १ भाग, रातो-पहेँलो-सेतो फूल, नरिवल, धूपबत्ती, रातो-सेतो कपडा, दीप-कलश-गणेश, अबीर, केशरी, रङ्गाएको धागो आदि ।

**अथ विश्वकर्मपूजाविधिः**

प्राणान् प्रतिष्ठाप्य ध्यानं कुर्यात् । तद्यथा

ध्यानम्

**ॐ दशपाल महावीर सुचित्र कर्मकारक ॥**

**विश्वकृत् विश्वधृक् च त्वं वसना मानदण्डधृक् ॥**

**ॐ देवशिल्पिन् ! महाभाग देवानां कार्यसाधक ।**

**विश्वकर्मन्नमस्तेऽस्तु सर्वाभीष्टप्रदायक ॥**

ॐ श्रीविश्वकर्मणे नमः । ध्यायामि ।

आवाहनम्

**ॐ आवाहयामि देवेशं विश्वकर्माणमीश्वरम् ।**

**मूर्त्तामूर्त्तकरं देवं सर्वकर्त्तारमीश्वरम् ॥**

**ॐ त्रैलोक्यसूत्रकर्तारं द्विभुजं विश्वदर्शितम् ।**

**आगच्छ विश्वकर्मस्त्वं यज्ञेऽस्मिन् सन्निधो भव ॥**

ॐ श्रीविश्वकर्मणे नमः । आवाहयामि ।

आसनम्

**ॐ सुवर्णरचितं देव दिव्यास्तरणशोभितम् ।**

**आसनं हि मया दत्तं गृहाणाङ्गिरसीसुतः ॥**

ॐ श्रीविश्वकर्मणे नमः । आसनं समर्पयामि ।

पाद्यजलम्

**ॐ इदं पाद्यं मया दत्तं सर्वसौगन्ध्यसंयुतम् ।**

**गृहीत्वा विश्वकर्मेश प्रसन्नो भव वास्तुज ॥**

ॐ श्रीविश्वकर्मणे नमः । पाद्यजलं समर्पयामि ।

अर्घ्यम्

**ॐ दिव्यौषधिरसोपेतं गन्धपुष्पाक्षतैः सह ।**

**गृहाणार्घ्यं मया दत्तं विश्वकर्मन्नमोऽस्तु ते ॥**

ॐ श्रीविश्वकर्मणे नमः । अर्घ्यं समर्पयामि ।

आचमनीम्

**ॐ सुगन्धवासितं दिव्यं निर्मलं सलिलं विभो ।**

**गृहाणाचमनं सौम्य विश्वकर्मन् दयानिधे ॥**

ॐ श्रीविश्वकर्मणे नमः । आचमनीयं समर्पयामि ।

मधुपर्कम्

**ॐ नमो देवाय भद्राय गृहनिर्माणशालिने ।**

**मधुपर्कं गृहाणेमां विश्वकर्मन् सुधोपमम् ॥**

ॐ श्रीविश्वकर्मणे नमः । मधुपर्कं समर्पयामि ।

पञ्चामृतम्

**ॐ पञ्चामृतं मयानीतं पयो दधि घृतं मधु ।**

**शुद्धशर्करया युक्तं विश्वकर्मन् प्रगृह्यताम् ॥**

ॐ श्रीविश्वकर्मणे नमः । पञ्चामृतं समर्पयामि ।

शुद्धजलम्

**ॐ इदं शुद्धजलं देव समानीतं मयाऽऽदरात् ।**

**भागीरथीजलोपेतं शुद्धस्नानं प्रगृह्यताम् ॥**

ॐ श्रीविश्वकर्मणे नमः । शुद्धं जलं समर्पयामि ।

वस्त्रम्

**ॐ सूक्ष्मतन्तुस्तथा नानारत्नैः संग्रथितं मया ।**

**शरीराच्छादनार्थाय गृह्यतां सूत्रवर्द्धन ॥**

ॐ श्रीविश्वकर्मणे नमः । वस्त्रं समर्पयामि ।

यज्ञोपवीतम्

**ॐ नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।**

**ब्रह्मसूत्रं चोत्तरीयं गृह्यतां धर्मनन्दन ॥**

ॐ श्रीविश्वकर्मणे नमः । यज्ञोपवीतं समर्पयामि ।

आभूषणम्

**ॐ शिरस्कं कुण्डलं हारं सोत्तरीयं तथैव च ।**

**अलंकारं प्रगृह्यात्र विश्वकर्मन् नमोऽस्तु ते ॥**

ॐ श्रीविश्वकर्मणे नमः । आभूषणानि समर्पयामि ।

चन्दनम्

**ॐ श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।**

**विलेपनं विधानज्ञ गृह्यतां चन्दनं शुभम् ॥**

ॐ श्रीविश्वकर्मणे नमः । चन्दनं समर्पयामि ।

अक्षताः

**ॐ अक्षताश्च कलानाथ कुङ्कुमाक्ताः सुशोभिताः ।**

**मया निवेदिता भक्त्या गृहाण वास्तुनन्दन ॥**

ॐ श्रीविश्वकर्मणे नमः । अक्षतान् समर्पयामि ।

पुष्पम्

**ॐ मल्लिकानि सुगन्धीनि मालत्यादीनि वै विभो ।**

**मयानीतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥**

ॐ श्रीविश्वकर्मणे नमः । पुष्पाणि समर्पयामि ।

पुष्पमाला

**ॐ सौरभाणि सुमाल्यानि मया संग्रथितानि च ।**

**भक्त्या समर्पितं देव पुष्पमालां गृहाण भो ॥**

ॐ श्रीविश्वकर्मणे नमः । पुष्पमालां समर्पयामि ।

तुलसीदलं बिल्वपत्रं विविधपुष्पाणि च

**ॐ कोमलानि सुगन्धीनि मञ्जरीसंयुतानि च ।**

**तुलस्याः सदलान्यद्य विश्वकर्मन् प्रगृह्यताम् ॥**

**त्रिदलैर्बिल्वपत्रैश्च कोमलैः शङ्करप्रियैः ।**

**तव पूजां करिष्यामि प्रसीद शिल्पिनां वर ॥**

ॐ श्रीविश्वकर्मणे नमः । तुलसीदलं बिल्वपत्राणि विविधपुष्पाणि वा समर्पयामि ।

धूपः

**ॐ वनस्पतिरसोद्भूतं गन्धाढ्यं सुमनोहरम् ।**

**धूपं गृहाण देवेश द्रुतकर्मपरायण ॥**

ॐ श्रीविश्वकर्मणे नमः । धूपम् आघ्रापयामि ।

दीपः

**ॐ घृतवर्त्तिसमायुक्तं कर्पूरादिसमन्वितम् ।**

**दीपं गृहाण कर्मेश अन्धकारविनाशकम् ॥**

ॐ श्रीविश्वकर्मणे नमः । प्रत्यक्षदीपं दर्शयामि ।

नैवेद्यम्

**ॐ पूपमोदकसंयावपयःपक्वादिकं वरम् ।**

**निर्मितं बहुसत्कारैर्नैवेद्यं प्रतिगृह्यताम् ॥**

ॐ श्रीविश्वकर्मणे नमः । नैवेद्यं निवेदयामि ।

आचमनीयम्

**ॐ शीतलं स्वादु शुद्धञ्च तृषातृप्तिकरं जलम् ।**

**सर्वदैव स्वतृप्तचर्थं विश्वकर्मन् प्रगृह्यताम् ॥**

**ॐ सर्वौषधीरसोपेतं पवित्रं सरिताजलम् ।**

**आचम्यतां मया दत्तं गृहाण देवताप्रिय ! ॥**

ॐ श्रीविश्वकर्मणे नमः । आचमनीयं जलं समर्पयामि ।

फलम्/ऋतुफलञ्च

**ॐ फलानीमानि भो देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ॐ श्रीविश्वकर्मणे नमः । फलानि ऋतुफलानि वा समर्पयामि ।

ताम्बूलम्

**ॐ ताम्बूलं पूगीसंयुक्तं चूर्णं खादिरसंयुतम् ।**

**लवङ्गादियुतं देव गृह्यतां ब्रह्मवंशज ॥**

ॐ श्रीविश्वकर्मणे नमः । ताम्बूलं समर्पयामि ।

दक्षिणाद्रव्यम्

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

ॐ श्रीविश्वकर्मणे नमः । दक्षिणाद्रव्यं समर्पयामि ।

नमस्कारः

**ॐ नमामि विश्वकर्म त्वां द्विभुजं विश्ववन्दितम् ।**

**गृहवास्तुविधातारं महाबलपराक्रमम् ॥**

**प्रसीदविश्वकर्म त्वं शिल्पविद्याविशारद ।**

**दण्डपाणे नमस्तुभ्यं तेजोमूर्त्तिधर प्रभो ॥**

ॐ श्रीविश्वकर्मणे नमः । नमस्करोमि ।

आरार्तिक्यम्

**ॐ कर्पूरवर्तिसंयुक्तं गोघृतेन सुपूरितम् ।**

**आरार्तिक्यमहं कुर्वे गृहाण सौख्यवर्द्धन ॥**

ॐ श्रीविश्वकर्मणे नमः । आरार्तिक्यं समर्पयामि ।

मन्त्रपुष्पाञ्जलिः

**ॐ नारायणाब्जजनितस्य विधेः सुतस्य**

**धर्मात्मजस्य गृहवास्तुसुतं वरेण्यम् ।**

**स्वर्गादिलोकरचनाकुशलं तमाद्यं**

**श्रीविश्वकर्मविश्रुतं सततं स्मरामः ॥**

ॐ श्रीविश्वकर्मणे नमः । मन्त्रपुष्पाञ्जलिं समर्पयामि ।

विशेषार्घ्यम्

**ॐ देवशिल्पिन् ! महादेव ! शिल्पविद्याविशारद ! ।**

**गृहाणार्घ्यं मया दत्तं प्रसन्नो भव सर्वदा ॥**

ॐ श्रीविश्वकर्मणे नमः । अर्घ्यं निवेदयामि ।

ततो दक्षिणादिकं ब्राह्मणेभ्यो दत्त्वा देवान् विसृज्य प्रसादग्रहणं च कुर्यात् ।

*॥ इति विश्वकर्मपूजाविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| धातुमयपात्राणाम् | = | तामा, पित्तल आदि धातुले बनेका भाँडाहरूका |
| यन्त्राणाम् | = | मिसिनहरूका (जस्तै : पानी तान्ने, एक्स-रे गर्ने) |
| आयसम् | = | फलाम |
| धातूत्पन्नम् | = | फलाम, तामा, पित्तल आदि धातुबाट उत्पन्न हुने, धातुबाट निर्मित |
| सज्जीकृत्य | = | सजाएर, सिँगारेर |
| वसना | = | थैली, तिजौरी, गल्ला आदि |

## अभ्यासार्थाः प्रश्नाः

१. **विश्वकर्मणः पूजा विशेषतः कदा कदा क्रियते ?**

२. **विश्वकर्मदेवः कीदृशो वर्तते ?**

३. **विश्वकर्म कस्य देवः ?**

४. **विश्वकर्मणः पूजायां जनविश्वासः कीदृशोऽस्ति ?**

५. **वाहनवाहका वाहनारोहणसमये किं कुर्वन्ति ?**

६. **विश्वकर्मपूजायाः महत्त्वं प्रदर्शयत ।**

७. **प्रतिज्ञासङ्कल्पवाक्यस्वरूपं लिखत ।**

८. **विश्वकर्मपूजनेन किं किं लभ्यते ? लिखत ।**

९. **पूर्णपात्रदानस्य सङ्कल्पस्वरूपं लिखत ।**

१०. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

विश्वकर्मा, बलशाली, आरोहणम्, प्रक्षाल्य

११. **पाठाधारेण रिक्तस्थानं पूरयत**

(क) ॐ दशपाल ! महावीर ! .................. ।

..................... वसना मानदण्डभाक् ॥

(ख) ..................... देवानां कार्यसाधक ।

विश्वकर्मन्नमस्तेऽस्तु ..................... ॥

(ग) ॐ नमामि विश्वकर्माणं ................. ।

..................... महाबलं पराक्रम् ॥

(घ) ॐ नारायणाब्जजनितस्य विधेः सुतस्य

........................................... ।

स्वर्गादिलोकरचना कुशलं तमाद्यम्

........................................... ॥

## प्रयोगाभ्यासः

१. मित्रैः सह विश्वकर्मणः देवतायाः पूजाविधिं शुद्धरूपेण सस्वरं पठत ।

२. ध्यानमन्त्रान् पठित्वा शुद्धाशुद्धज्ञानाय मित्रेभ्यः श्रावयत ।

३. विद्यालयस्य प्राङ्गणे कक्षायां वा विश्वकर्मणः पूजायोजनं कुरुत ।

४. आयोजितायां पूजायां स्वयमेव पुरोहितो भूत्वा अन्यान् छात्रान् यजमानान् कारयत ।

५. काष्ठमण्डपे मध्यदेशप्रदेशे च समायोजितायां विश्वकर्मपूजायां काः काः समानता भिन्नता वा प्राप्यन्ते ? तत्रत्यानि मित्राणि सन्ति चेत् तेभ्यः श्रृणुत । स्वस्यानुभवं च तान् श्रावयतु ।

नवमः पाठः

# तुलसीपूजा नवान्नप्राशनञ्च

## महत्त्वम्

धार्मिकदृष्ट्या तुलस्या अतीव महत्त्वं वर्तते । तुलसीं प्रक्षिप्य एव वेदानुयायिनो भोजनं कुर्वन्ति । तुलस्या नैकविधगुणाः सन्ति । रोगशमनाय तुलस्याः सेवनं न वैदिकैः कुर्वन्ति अपि तु सर्वेऽपि मानवाः कुर्वन्ति । आयुर्वेदशास्त्रे च तुलस्या महत्त्वं ज्ञात्वैव रोगिभ्यः तुलसीपत्रं तुलसीक्वाथं तुलसीमञ्जरीं सेवनाय च अभिप्रेरयन्ति । सामान्यतया कासश्वासबाधासु तुलसीसेवनेन ते रोगाः दूरीभवन्ति । विशेषतो बालानां कृते तु अतीव हितकरमौषधमस्ति तुलसी । तुलस्या दर्शनेन पूजनेन सेवनेन भुक्तिर्मुक्तिश्च प्राप्यते ।

## पूजाविधिः

तुलस्या बीजं ज्येष्ठशुक्लैकादश्यां मृत्तिकासु संस्थाप्य आषाढशुक्लैकादश्यां तुलसीमठे समारोप्यते । ततश्चतुर्मासपर्यन्तं तुलस्या पूजनं जलार्चनं सेवनं कृत्वा कार्तिकशुक्लद्वादश्यामुद्यापनाय दामोदरनाम्ना देवेन भगवता शालिग्रामेन वा सह तुलस्याः विवाहोत्सवं सम्पाद्य उद्यापनहवनादिकं क्रियते । तत्र सम्पादितपूजासामग्रीः कर्ता आचमनं कृत्वा प्रतिज्ञासङ्कल्पं कुर्यात् । दीपकलशगणेशादीन् सम्पूज्य तुलसीपूजनं व्रतं च चरेत् ।

**पूजासामग्री**

पूजासामग्री १ भाग, दियो, कलश, गणेश, सौभाग्य सामग्री, ठुलो माला-१, सानो माला-२, दामोदरलाई पहेँलो कपडा, तिल, जौ, नयाँ चामल, दही, केरा, अन्य फलहरू आदि ।

## अथ तुलसीपूजाविधिः

आचमनम्

केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविन्दाय नमः इति करं प्रक्षाल्य विष्णवे नमः इति नेत्रयोरुदकस्पर्शनम् ।

## आदौ मङ्गलोच्चारणम्

श्रीमन्महागणाधिपतये नमः । लक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । वाणीहिरण्यगर्भाभ्यां नमः । शचीपुरन्दराभ्यां नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो

नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । मातृपितृचरणकमलेभ्यो नमः । पतिचरणारविन्दाभ्यां नमः। सर्वेभ्यो देवेभ्यो नमः। सर्वेभ्यो ब्राह्मणेभ्यो नमः। निर्विघ्नमस्तु पुण्यं पुण्याहं दीर्घमायुरस्तु ।

ततो मङ्गलदेवताप्रार्थना

**ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।**

**लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥**

**धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।**

**द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥**

**विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा**

**सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥**

**शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।**

**प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥**

**अभीप्सितार्थसिध्यर्थं पूजितो यः सुरासुरैः ।**

**सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥**

**सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।**

**शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥**

**सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।**

**येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥**

**तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।**

**विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥**

**लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।**

**येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥**

**विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ।**

**सरस्वतीं प्रणम्यादौ सर्वकामार्थसिद्धये ॥**

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**

**तत्र श्रीर्विजयो लक्ष्मीर्ध्रुवा नीतिर्मतिर्मम ॥**

**सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः ।**

**देवा दिशन्तु तत्सिद्धिं ब्रह्मेशानजनार्दनाः ॥**

**सङ्कल्पः**

पूर्वसङ्कल्पमुच्चार्य अहं मम श्रीतुलसीदेवताप्रीतिद्वारा सुखसौभाग्यसन्तत्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थं श्रीपरमेश्वरप्रीतये दीपकलशगणेशपूजनपूर्वकं तुलसीपूजनं करिष्ये । इति सङ्कल्प्यार्घ्यं संस्थाप्य दीपं कलशं गणेशं चावाह्य पाद्यादिभिरुपचारैः पूजयेत् ।

श्रीतुलसीध्यानम्

**ॐ ध्यायेच्च तुलसीं देवीं श्यामां कमललोचनाम् ।**

**प्रसन्नां पद्मवदनां वराभयचतुर्भुजाम् ॥**

**किरीटहारकेयूरकुण्डलादिविभूषणाम् ।**

**धवलाङ्कुशसंयुक्तां पद्मासननिवेशिताम् ॥**

**ध्यायाम्यहं प्रियां विष्णोः सर्वदेवनमस्कृताम् ।** इति ध्यात्वा

आवाहनम्

**ॐ देवि त्रैलोक्यजननि सर्वलोकैकपावनि ।**

**आगच्छ वरदे मातः प्रसीद तुलसि प्रिये ॥**

श्रीतुलस्यै नमः । आवाहयामि ।

आसनम्

**ॐ सर्वदेवमयं देवि सर्वदा विष्णुवल्लभे ।**

**देवि स्वर्णमयं दिव्यं गृहाणासनमव्यये ॥**

श्रीतुलस्यै नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ सर्वे देवा यथा स्वर्गे तथा त्वं भुवि सर्वदा ।**

**दत्तं पाद्यं गृहाणेदं तुलसी त्वं प्रसीद मे ॥**

श्रीतुलस्यै नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ गन्धपुष्पसमायुक्तं सर्वेषां प्रीतिदायकम् ।**

**अर्घ्यं गृहाण त्वं देवि दैत्यान्तकरणप्रिये ॥**

श्रीतुलस्यै नमः । अर्घ्यं समर्पयामि ।

आचमनम्

**ॐ कर्पूरवासितं तोयं सुवर्णकलशे स्थितम् ।**

**दत्तमाचमनीयं च गृहाण हरिवल्लभे ॥**

श्रीतुलस्यै नमः । आचमनं समर्पयामि ।

स्नानम्

**ॐ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।**

**स्नापिताऽसि मया देवि तथा शान्तिं कुरुष्व मे ॥**

श्रीतुलस्यै नमः । स्नानं समर्पयामि ।

मलापकर्षणस्नानम्

**ॐ गङ्गागोदावरीकृष्णापयोष्ण्याद्यापगास्तथा ।**

**आयान्तु ताः सदा देव्यास्तुलस्याः स्नानकर्मणि ॥**

श्रीतुलस्यै नमः । मलापकर्षणस्नानं समर्पयामि ।

पञ्चामृतस्नानम्

**ॐ पञ्चामृतं मयानीतं पयोदधिघृतं मधु ।**

**सह शर्करया देवि स्नानार्थं प्रतिगृह्यताम् ॥**

श्रीतुलस्यै नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ आपोऽअस्मान्** ... ।

सकलपूजापरिपूरणार्थं गन्धाक्षतपुष्पाणि समर्पयामि । निर्माल्यं विसृज्य पुनश्च गन्धाक्षतपुष्पाण्यर्पयित्वाऽभिषेकं कुर्यात् ।

अभिषेकः

**ॐ कृष्णा सरस्वती काली तुङ्गभद्रा शची यथा ।**

**भागीरथी पार्वती च रमा नारायणी मता ॥**

**सुभद्रा द्रौपदी साध्वी माता चैवाप्यरुन्धती ।**

**सावित्री कालिकाऽहल्या स्नापयिष्यन्तु सर्वदा ॥**

**ताभिः कृताभिषेका त्वं ददासि गुरुसौभगम् ।**

**अतस्त्वां स्नापयिष्यामि तुलसी विष्णुवल्लभे ॥**

**ॐ शान्तिः शान्तिः सुशान्तिर्भवतु ।** अमृताभिषेकोऽस्तु । श्रीतुलस्यै नमः अभिषेकं समर्पयामि ।

वस्त्रम्

**ॐ क्षीरोदमथनोद्भूते चन्द्रलक्ष्मि सहोदरे ।**

**गृह्यतां परिधानार्थमिदं पीताम्बरं शुभम् ॥**

श्रीतुलस्यै नमः । वस्त्रं समर्पयामि ।

कञ्चुकीमुपवस्त्रं च

**ॐ कञ्चुकीमुपवस्त्रं च नानारत्नैः समन्वितम् ।**

**गृहाण त्वं मया दत्तं तुलसी भयहारिणी ॥**

श्रीतुलस्यै नमः । कञ्चुकीमुपवस्त्रं समर्पयामि ।

कुङ्कुमम्

**ॐ केशरागरुसंयुक्तं चन्दनादिसमन्वितम् ।**

**कस्तूरिकासमायुक्तं कुङ्कुमं प्रतिगृह्यताम् ॥**

श्रीतुलस्यै नमः । कुङ्कुमं समर्पयामि ।

अक्षतान्

**ॐ अक्षतांश्च महादेवि तुलसि सौख्यदायकान् ।**

**अर्पयामि सदा भक्त्या सुखसन्ततिलब्धये ॥**

श्रीतुलस्यै नमः । अक्षतान् समर्पयामि ।

सौभाग्यद्रव्यम्

**ॐ हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलान्वितम्** ।
**मया निवेदितं भक्त्या गृहाण परमेश्वरि** ॥

श्रीतुलस्यै नमः । सौभाग्यद्रव्यं समर्पयामि ।

पुष्पाणि

**ॐ माल्यादीनि सुगन्धीनि मालत्यादीनि सत्तमे** ।
**मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम्** ॥

श्रीतुलस्यै नमः । पुष्पाणि पुष्पमालां च समर्पयामि ।

धूपः

**ॐ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः** ।
**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्** ॥

श्रीतुलस्यै नमः । धूपं समर्पयामि ।

दीपः

**ॐ वैश्वानरप्रज्वलितं घृतकार्पासनिर्मितम्** ।
**दीपं भक्त्या गृहाणेदं त्रैलोक्यध्वान्तनाशके** ॥

श्रीतुलस्यै नमः । दीपं समर्पयामि ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्** ।
**नैवेद्यमर्पयामि त्वां तुलसि माधवप्रिये** ॥

ॐ प्राणाय नमः । ॐ अपानाय नमः । ॐ व्यानाय नमः ।

ॐ समानाय नमः । ॐ उदानाय नमः । इति मन्त्रैर्ग्रासमुद्राः प्रदर्श्य

श्रीतुलस्यै नमः । नैवेद्यं समर्पयामि । मध्ये पानीयम् उत्तरापोशानं हस्तप्रक्षालनं करोद्वर्तनार्थे चन्दनं च समर्पयामि ।

फलम्

**ॐ इदं फलं मया देवि स्थापितं पुरतस्तव** ।
**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि** ॥

श्रीतुलस्यै नमः । फलं समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।**

**कर्पूरैलादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

श्रीतुलस्यै नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

श्रीतुलस्यै नमः । दक्षिणां समर्पयामि ।

कर्पूरारार्तिक्यम्

**ॐ नीराजयामि सततं हरिवल्लभे ते**

**कर्पूरवर्तिभिरलं सुखदायकं त्वाम् ।**

**पादौ भजाम्यविरतं तव देवि माये**

**वंशाय सौख्यमपि देहि बलं च पूर्णम् ॥**

श्रीतुलस्यै नमः । कर्पूरारार्तिक्यं दर्शयामि ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि तानि प्रणश्यन्तु प्रदक्षिणपदे पदे ॥**

**नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये ।**

**नम आहवनीयाय तुलस्यै ते नमो नमः ॥**

श्रीतुलस्यै नमः । प्रदक्षिणां समर्पयामि ।

मन्त्रपुष्पयुक्तो नमस्कारः

**ॐ विष्णुप्रियकरे देवि तुलसि सुखदायिके ।**

**पुष्पाञ्जलिं प्रयच्छामि पत्युरायुष्यवृद्धये ॥**

श्रीतुलस्यै नमः । पुष्पयुक्तं नमस्कारं समर्पयामि ।

विशेषार्घ्यः

**ॐ गन्धप्रसूनसंयुक्तं फलमुद्राप्रशोभितम् ।**

**अर्घ्यं ददामि तुलसि तव प्रीत्यै नमो नमः ॥**

श्रीतुलस्यै नमः । विशेषार्घ्यं समर्पयामि ।

प्रार्थना

**ॐ सौभाग्यं सन्ततिं देवि धनं धान्यं च मे सदा ।**

**आरोग्यशोकशमनं कुरु मे माधवप्रिये ॥**

**अभीष्टफलसिद्धिं च सदा देहि हरिप्रिये ।**

**देवैस्त्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः ॥**

**अतो मां सर्वदा भक्त्या कृपादृष्टचा विलोकय ।**

**पत्युरायुष्यभाग्यं च सदा देवि हरिप्रिये ॥**

**पूतनाभयसन्त्रासाद्रक्षितश्च यथा हरिः ।**

**तथा संसारसन्त्रासाद्रक्ष मे वंशमुत्तमम् ॥**

मन्त्रपुष्पाञ्जलिः

**या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुः पावनी ।**

**रोगाणामभिवन्दिता निरसिनी सिक्तान्तकत्रासिनी ॥**

**प्रत्यासक्तिविधायिनी भगवतः कृष्णस्य संरोपिता ।**

**न्यस्ता त्वच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥**

श्रीतुलस्यै नमः । प्रार्थनां समर्पयामि ।

**अनेन अस्मत्कृतेन यथामिलितोपचारैः पूजनकर्मणा श्रीतुलसीदेवता प्रीयतां न मम ।**

एवं यथाशक्तिविधिना चतुर्मासपूजां विधाय कार्तिकशुक्लद्वादश्यादौ शुभदिने वा वार्षिकोद्यापनं हवनं च कर्तव्यम् ।

अस्मिन्नेवावसरे नवान्न (न्वागी) प्राशनाय नवीनान्नेन **ॐ अन्नपतेन्नस्य०** अन्नपूर्णानाममन्त्रेण वा देवं अष्टोत्तरशतवारं (१०८) हुत्वा नवीनान्नस्यैव नैवेद्यं इष्टदेवकुलदेवब्राह्मणादिभ्यश्च समर्प्य स्वयं च प्रसादरूपेण भुञ्जीत ।

*॥ इति तुलसीपूजा ॥*

## शब्दार्थाः

वेदानुयायिनः = वेद आदि शास्त्रको अनुसरण गर्नेहरू

रोगशमनाय = रोग शान्त गर्नका लागि

तुलसीक्वाथः = तुलसीका पात मञ्जरी आदिलाई पानीमा पकाइएको औषधी

कासश्वासबाधासु = खोकी, दम आदि रोगहरूले बाधा गरेमा

उचितोच्चारणम् = ह्रस्वदीर्घादि मिलेको सही उच्चारण

निर्माल्यविसर्जनम् = भगवान्लाई स्नान गराउँदाको जल, दुध, दही आदि मिसिएको जलको विसर्जन

नवान्नप्राशनम् = देवता पितृहरूलाई होम गरी चढाई नयाँ फलेको अन्न खान सुरु गर्ने कार्य

## अभ्यासार्थाः प्रश्नाः

१. **आयुर्वेदज्ञा तुलसीसेवनार्थं कथं प्रेरयन्ति ?**

२. **तुलस्याः सेवनादिना किं प्राप्यते ?**

३. **तुलसीबीजरोपणं कदा क्रियते ?**

४. **नवीनान्नं केभ्यः समर्प्य भुज्यते ?**

५. **तुलस्या महत्त्वं प्रदर्शयत ।**

६. **तुलस्या ध्यानमन्त्रौ लिखत ।**

७. **तुलस्या विशेषार्घ्यमन्त्रं लिखत ।**

८. **नवीनान्नप्राशनकर्मस्वरूपं प्रदर्शयत ।**

९. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

मलापकर्षणम्, गुणाः, विशेषतः, अभिषेकः, सौभाग्यम् ।

१०. **पाठाधारेण रिक्तस्थानं पूरयत**

(क) ॐ ध्यायेच्च तुलसीं देवीं .............. ।

.................... वराभयचतुर्भुजाम् ॥

(ख) ॐ .................... तुङ्गभद्रा शची यथा ।

भागीरथी पार्वती च .................... ॥

(ग) ॐ नीराजयामि सततं हरिवल्लभे ते

........................................ ॥

पादौ भजाम्यविरतं सुखदायकं त्वाम्

........................................ ।

वंशाय सौख्यमपि देहि बलं च पूर्णम् ॥

**प्रयोगाभ्यासः**

१. तुलसीमठस्य तुलस्या च चित्रं चित्रयत ।
२. तुलसीपूजने प्रयुक्तानां मन्त्राणां सस्वरं वाचनं कुरुत ।
३. परिवर्तितानां छन्दानामुच्चारणं गुरुभ्यो ज्ञायेत ।
४. स्वगृहे पूजितायाः तुलस्या उद्यापनहवनं पूर्वं कदा जातम् ? कथं सम्पादितमासीत् ? श्रावयत ।
५. कर्पूरारार्तिक्यमन्त्रपुष्पाञ्जलिविशेषार्घ्यप्रार्थनासु प्रयुक्तान् मन्त्रान् कण्ठस्थं कुरुत ।
६. तव गृहे नवान्नप्राशनकार्यं धार्मिकविधिना भवति न वा ? भवति चेत् यथाज्ञातविधिं श्रावयत ।

दशमः पाठः

# सरस्वतीपूजा व्यासपूजा च

## महत्त्वम्

मार्गशुक्लपञ्चम्यां सरस्वत्याः पूजनं भवति । वसन्तपञ्चमी नाम्ना चेयं तिथिर्ज्ञायते । पठनपाठनक्षेत्रेषु संलग्नानाम् अस्मत्सदृशानां छात्राणामिदं पर्व अतीव महत्त्वाधायकरूपेण ज्ञायते । सरस्वतीमाता ज्ञानबुद्धिविवेकचेतसां च जननी अस्ति । सरस्वत्याः कृपां विना कोऽपि जनः उन्नतिं प्रगतिं च कर्तुं न शक्नोति ।

प्रत्युत्पन्नमतियुतजना एव लोके विविधक्षेत्रेषु महत्स्थानं प्राप्नुवन्ति । देशनिर्माणाय राजनीतौ शिक्षानीतौ च ते कुशलिनो भवन्ति । सरस्वत्याः कृपया वा सरस्वत्याराधनेनैव तां प्राप्तुं सम्भवति । सरस्वत्यास्तत्र पञ्चम्यां गुरोर्व्यासस्य चाषाढशुक्लपूर्णिमायां पूजा भवति । यतो हि विशेषदिने विशेषपर्वणि स्वल्पेनापि कृतपूजनेन बहुफलप्राप्तिर्भवति । एतेषां पूजोपासनाध्यानैश्च अस्माभिः जीवनस्य सोपानारोहणं साफल्यं जायते । अतः सरस्वतीगुरुमान्यजनानां कृपादृष्टि एवास्माकं जीवनस्य सफलतायाः कारणम् । एवमन्याश्रयस्थलं गुरुकृपा । मातृपितृसहितमान्यजनानां गुरोर्व्यासस्य सरस्वत्याश्च पूजनेन सम्मानेन हि वयं विद्यां मानं विशेषस्थानं च सहजतया प्राप्तुं शक्नुमः । अतस्तान् प्रति सर्वदा कृतज्ञताज्ञापनमस्माकं परमं कर्तव्यं भवति ।

## पूजाविधिः

पवित्रीभूय आचमनं कृत्वा कर्मपात्रं निर्माय पूजासामग्रीः सम्पाद्य सरस्वत्या व्यासस्य वा यन्त्रादिकं संलेख्य सरस्वतीपूजनाय व्यासपूजनाय वा प्रतिज्ञासङ्कल्पं कृत्वा पूजनं कुर्यात् । अमुक गोत्रस्य परिवारान्वितस्य मम ज्ञाताज्ञातपापक्षयपूर्वकम् अस्मदीयानां सबालवनितानां विद्यानुरागिणां सर्वेषां बालकानां बालिकानां च श्रीवागीश्वरीसरस्वतीसुप्रसादसिद्धिद्वारा सर्वविधविद्याप्राप्त्यर्थं ज्ञानाभिवृद्ध्यर्थं सरस्वतीपूजनं तदङ्गत्वेन दीपकलशगणेशादीनां च पूजनं ब्राह्मणवरणं पुण्याहवाचनं चाहं करिष्ये ।

इति सङ्कल्प्य दीपकलशगणेशादिदेवान् सम्पूज्य मण्डलस्थदेवान् सम्पूज्य धूपदीपनैवेद्यादिकं

च कृत्वा प्रधानदेवतायाः सरस्वत्याः पूजनं व्यासपूजनं वा कुर्यात् ।

## पूजासामग्री

(क) सरस्वतीको प्रतिमा, मूर्ति वा तस्वीर, पूजासामग्री १ भाग, सौभाग्य सामग्री, सेतो कपडा आदि सहित १ भाग, सेतो फूल, माला, लेखनी, पुस्तिका, पुस्तकहरू आदि ।

(ख) व्यासको प्रतिमा, चढाउने कपडा, पूजाको सामग्री १ भाग, आफ्नो गुरुको पनि प्रतिमा वा साक्षात् भेट, दक्षिणा, माला, फूल, फलहरू, मिठाई, नरिवल आदि ।

**अथ सरस्वतीपूजाविधिः**

सविधि सरस्वत्याः प्राणप्रतिष्ठां कृत्वा पूजनादिकं कुर्यात् । तत्रादौ

ध्यानम्

**ॐ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं**

**वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्** ।

**हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थिताम्**

**वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम्** ॥

ॐ श्रीसरस्वत्यै नमः । ध्यायामि ।

आवाहनम्

**ॐ अत्रागच्छ जगद्वन्द्ये ! सर्वलोकैकपूजिते !** ।

**मया कृतामिमां पूजां गृहाण जगदीश्वरि !** ॥

**ॐ पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धिया वसुः** ॥

ॐ श्रीसरस्वत्यै नमः । आवाहयामि ।

आसनम्

**ॐ अनेकरत्नसंयुक्तं सुवर्णेन विराजितम्** ।

**मुक्तामण्यङ्कितं चारु चासनं ते ददाम्यहम्** ॥

ॐ श्रीसरस्वत्यै नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ गन्धपुष्पाक्षतैः सार्द्धं शुद्धतोयेन संयुतम्** ।

**शुद्धस्फटिकतुल्याङ्गि ! पाद्यं ते प्रतिगृह्यताम्** ॥

श्रीसरस्वत्यै नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ भक्ताऽभीष्टप्रदे ! देवि ! देवदेवादिवन्दिते !।**

**सर्वाधारे ! जगद्धात्रि ! ददाम्यर्घ्यं गृहाण मे ॥**

श्रीसरस्वत्यै नमः । अर्घ्यं समर्पयामि

आचमनीयम्

**ॐ पूर्णचन्द्रसमानास्ये ! कोटिसूर्यसमप्रभे !।**

**भक्त्या समर्पितं देवि ! गृहाणाचमनीयकम् ॥**

ॐ श्रीसरस्वत्यै नमः । आचमनीयं समर्पयामि ।

मधुपर्कः

**ॐ दधिक्षौद्रमिदं शुभ्रं कपिलायाः सुगन्धिकम् ।**

**सुस्वादु मधुरं देवि ! मधुपर्कं गृहाण भो !॥**

ॐ श्रीसरस्वत्यै नमः । मधुपर्कं समर्पयामि । स्नानीयं च समर्पयामि ।

पञ्चामृतम्

**ॐ दधिक्षीरघृतोपेतं शर्करामधुसंयुतम् ।**

**पञ्चामृतं मयानीतं स्वीकुरुष्व महेश्वरि !॥**

ॐ श्रीसरस्वत्यै नमः । पञ्चामृतं समर्पयामि ।

शुद्धजलम्

**ॐ सुवर्णकलशानीतैर्नानागन्धसुवासितैः ।**

**इदं शुद्धोदकस्नानं स्वीकुरुष्व सुरेश्वरि !॥**

ॐ श्रीसरस्वत्यै नमः । शुद्धजलं समर्पयामि ।

वस्त्रम्

**ॐ शुक्लवस्त्रद्वयं देवि ! कोमलं चारुसुन्दरम् ।**

**भक्त्या समर्पितं मात ! ब्रह्माणि ! प्रतिगृह्यताम् ॥**

ॐ श्रीसरस्वत्यै नमः । वस्त्रं समर्पयामि ।

आभूषणम्

**ॐ वज्रमाणिक्यवैदूर्यमुक्ताविद्रुममण्डितम् ।**

**पुष्परागसमायुक्तं भूषणं प्रतिगृह्यताम् ॥**

ॐ श्रीसरस्वत्यै नमः । आभूषणं समर्पयामि ।

चन्दनम्

**ॐ चन्दनागरुकस्तूरीकर्पूराद्यैश्च संयुतम् ।**

**गन्धं गृहाण वरदे सरस्वति नमोऽस्तुते ॥**

ॐ श्रीसरस्वत्यै नमः । चन्दनं समर्पयामि ।

अक्षताः

**ॐ अक्षतान् धवलान् दिव्यान् केशरान्विततण्डुलान् ।**

**गृहाण वरदे ! देवि ! ब्रह्मशक्ति ! शुभाक्षतान् ॥**

ॐ श्रीसरस्वत्यै नमः । अक्षतान् समर्पयामि ।

पुष्पमाला

**ॐ नीलोत्पलदलैः शुभ्रैस्तत्कालतरुसम्भवैः ।**

**प्रकल्पितानि माल्यानि गृहाणामरवन्दिते ! ॥**

ॐ श्रीसरस्वत्यै नमः । पुष्पमालां समर्पयामि ।

हरिद्राचूर्णं सिन्दूरं सौभाग्यद्रव्याणि च

**ॐ हरिद्राकुङ्कुमं चैव सिन्दूरं कज्जलान्वितम् ।**

**सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि ! ॥**

ॐ श्रीसरस्वत्यै नमः । हरिद्राचूर्णं सिन्दूरं सौभाग्यद्रव्याणि च समर्पयामि ।

सुगन्धितैलम्

**ॐ तैलानि च सुगन्धीनि द्रव्याणि विविधानि च ।**

**मया दत्तानि लेपार्थं गृहाण परमेश्वरि ! ॥**

ॐ श्रीसरस्वत्यै नमः । सुगन्धितैलं समर्पयामि ।

अङ्गपूजा

१. ॐ ब्रह्माण्यै नमः पादौ पूजयामि । २. ॐ ब्रह्मण्यमूर्तये नमः गुल्फौ पूजयामि ।

३. ॐ जगत्स्वरूपायै नमः जङ्घे पूजयामि । ४. ॐ जगदालये नमः जानुनी पूजयामि ।

५. ॐ चारुविलासिन्यै नमः ऊरू पूजयामि । ६. ॐ कमलभूत्यै नमः कटिं पूजयामि ।

७. ॐ जन्महीनायै नमः जघनं पूजयामि । ८. ॐ गम्भीरनाभये नमः नाभिं पूजयामि ।

९. ॐ वारिपूज्यायै नमः उदरं पूजयामि । १०. ॐ लोकमात्रे नमः स्तनौ पूजयामि ।

११. ॐ विशालवक्षसे नमः वक्षस्थलं पूजयामि । १२. ॐ सुविपश्चिते नमः कण्ठं पूजयामि ।

१३. ॐ स्कन्दप्रपूज्यायै नमः स्कन्धौ पूजयामि । १४. ॐ दीर्घसुवाहव्यै नमः बाहू पूजयामि ।

१५. ॐ पुस्तकधारिण्यै नमः हस्तौ पूजयामि । १६. ॐ श्रुतिरूपायै नमः श्रोत्रे पूजयामि ।

१७. ॐ वेदस्वरूपायै नमः वक्त्रं पूजयामि । १८. ॐ सुनासायै नमः नासिकां पूजयामि ।

१९. ॐ बिम्वसमानोष्ठ्यै नमः ओष्ठौ पूजयामि । २०. ॐ कमलचक्षुषे नमः नेत्रे पूजयामि ।

२१. ॐ तिलकधारिण्यै नमः भालं पूजयामि । २२. ॐ चन्द्रमूर्तये नमः केशान् पूजयामि ।

२३. ॐ सर्वेश्वर्यै नमः शिरः पूजयामि । २४. ॐ ब्रह्मरूपिण्यै नमः सर्वाङ्गं पूजयामि ।

लेखनीपूजा **ॐ लेखन्यै नमः** । इति नाममन्त्रेण पूजयेत् ।

धूपः

**ॐ दशाङ्गं गुग्गुलोपेतं सुगन्धं च मनोहरम् ।**

**धूपं गृहाण कल्याणि ! भक्तिं मे ह्यचलां कुरु ॥**

ॐ श्रीसरस्वत्यै नमः । धूपम् आघ्रापयामि ।

दीपः

**ॐ घृतवर्तिसमायुक्तं वह्निना योजितं मया ।**

**दीपं गृहाण चिद्रूपे ! कमलासनवल्लभे ! ॥**

ॐ श्रीसरस्वत्यै नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ अन्नं बहुविधं स्वादु रसैः षड्भिः समन्वितम्।**

**भक्त्या समर्पितं मात ! नैवेद्यं प्रतिगृह्यताम्॥**

ॐ श्रीसरस्वत्यै नमः। नैवेद्यं निवेदयामि। ततो पञ्च ग्रासमुद्रान् च प्रदर्शयेत्।

आचमनीयम्

**ॐ कर्पूरेण सुगन्धेन वासितं स्वादु शीतलम्।**

**जलमाचमनीयार्थं गृहाण परमेश्वरि !॥**

ॐ श्रीसरस्वत्यै नमः। आचमनीयं समर्पयामि।

फलम्

**ॐ इदं फलं मया देवि ! स्थापितं पुरतस्तव।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि॥**

ॐ श्रीसरस्वत्यै नमः। नानाविधानि फलानि समर्पयामि। आचमनीयं समर्पयामि।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्।**

**कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम्॥**

ॐ श्रीसरस्वत्यै नमः। ताम्बूलं समर्पयामि।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥**

ॐ श्रीसरस्वत्यै नमः। दक्षिणाद्रव्यं समर्पयामि।

नीराजनम्

**ॐ कदलीगर्भसम्भूतं घनसारं मनोहरम्।**

**आरार्तिक्यमहं कुर्वे पश्य मे वरदा भव॥**

**ॐ नीराजनं गृहाण त्वं जगदानन्ददायिनि।**

**जगत्तिमिरमार्तण्डमण्डले ते नमो नमः॥**

ॐ श्रीसरस्वत्यै नमः। नीराजनं समर्पयामि।

चामरं व्यजनं च

**ॐ शशाङ्ककरतुल्येन गोपुच्छेन सुरूपिणा ।**

**प्रोत्सारयामि दुरितं चामरेण सरस्वति ! ॥**

ॐ श्रीसरस्वत्यै नमः । चामरं व्यजनं च दोलयामि ।

आदर्शम्

**ॐ दर्शनेन त्वमादर्श नूनं मंगलदायिके ! ।**

**सौर्यसौभाग्यसत्कीर्तिर्निर्मलज्ञानदा भव ॥**

ॐ श्रीसरस्वत्यै नमः । आदर्शं दर्शयामि ।

पुष्पाञ्जलिः

**ॐ शारदे लोकमातस्त्वमाश्रिताभीष्टदायिनी ।**

**पुष्पाञ्जलिं गृहाणेमं मया भक्त्या समर्पितम् ॥**

**पाशाङ्कुशधरा वाणी वीणापुस्तकधारिणी ।**

**मम वक्त्रे वसेन्नित्यं दुग्धकुन्देन्दुनिर्मला ॥**

**चतुर्दशसु विद्यासु रमते या सरस्वती ।**

**चतुर्दशसु लोकेषु या एका पूज्यपादुका ॥**

**अक्षसूत्रांकुशधरा पाशपुस्तकधारिणी ।**

**मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे सदा ॥**

**यः कवित्वं निरातङ्कं भुक्तिमुक्ती च वाञ्छति ॥**

**सोऽभ्यर्चयेत् सदा भक्त्या पञ्चम्यां हि सरस्वतीम् ॥**

**सरस्वति ! महाभागे ! विद्ये ! कमललोचने ! ॥**

**विद्यारूपे ! विशालाक्षि ! विद्यां देहि नमोऽस्तु ते ॥**

**वीणाधरे ! विपुलमङ्गलदानशीले ! भक्तार्तिनाशिनि ! विरञ्चिहरीशवन्द्ये ।**

**कीर्तिप्रदेऽखिलमनोरथदे महार्हे ! विद्याप्रदायिनि ! सरस्वति ! नौमि नित्यम् ॥**

ॐ श्रीसरस्वत्यै नमः । मन्त्रपुष्पाञ्जलिं समर्पयामि ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥**

ॐ श्रीसरस्वत्यै नमः । प्रदक्षिणां समर्पयामि ।

विशेषार्घ्यम्

**ॐ ज्ञानविज्ञानसङ्गीतप्राप्तये हे सरस्वति ! ।**

**विषेषार्घ्यं मया दत्तं पूजापूर्णं करोतु मे ॥**

ॐ श्रीसरस्वत्यै नमः । विशेषार्घ्यं समर्पयामि ।

ततः सरस्वत्या स्तोत्रपाठं कुर्यात् ।

अथ सरस्वतीस्तोत्रम्

**रविरुद्रपितामहविष्णुनुतम् । हरिचन्दनकुंकुमपंकयुतम् ॥**

**मुनिवृन्द गणेन्द्र समानयुतम् । तव नौमि सरस्वति पादयुगम् ॥१॥**

**शशिशुद्धसुधाहिमधामयुतम् । शरदम्बरबिम्बसमानकरम् ॥**

**बहुरत्नमनोहरकान्तियुतम् । तव नौमि सरस्वति पादयुगम् ॥२॥**

**कनकाब्जविभूषितभूतिभवम् । भवभावविभाषितभिन्नपदम् ॥**

**प्रभुचित्तसमाहितसाधुपदम् । तव नौमि सरस्वति पादयुगम् ॥३॥**

**भवसागरमज्जनभीतिनुतम् । प्रतिपादितसन्ततिकारमिदम् ॥**

**विमलादिकशुद्धविशुद्धपदम् । तव नौमि सरस्वति पादयुगम् ॥४॥**

**मतिहीनजनाश्रयपादमिदम् । सकलागमभाषितभिन्नपदम् ॥**

**परिपूरितविश्वमनेकभवम् । तव नौमि सरस्वति पादयुगम् ॥५॥**

**परिपूर्णमनोरथधामनिधिम् । परमार्थविचारविवेकनिधिम् ॥**

**सुरयोषितसेवितपादतलम् । तव नौमि सरस्वति पादयुगम् ॥६॥**

**सुरमौलिमणिद्युतिशुभ्रकरम् । विषयादिमहाभयवर्णहरम् ॥**

**निजकान्तिविलेपितचन्दशिवम् । तव नौमि सरस्वति पादयुगम् ॥७॥**

**गुणनैककुलस्थितिभीतिपदम् । गुणगौरवगर्वितसत्यपदम् ॥**

**कमलोदरकोमलपादतलम् । तव नौमि सरस्वति पादयुगम् ॥८॥**

**त्रिसन्ध्यं यो जपेन्नित्यम् । जले वापि स्थले स्थितः ॥**

**पाठमात्राद् भवेत्प्राज्ञो ब्रह्मनिष्ठः पुनः पुनः ॥९॥**

॥ इति सरस्वतीस्तोत्रम् ॥

ततो भजनकीर्तनादिना सरस्वतीदिवसं व्यतीय रात्रौ जागरणादिकं कृत्वा प्रातः सरस्वतीं देवीं पुनः संक्षेपेण सम्पूज्य यान्तुदेवेति विसर्जयेत् । प्रसादादिकञ्च गह्णीयात् ।

*॥ इति सरस्वतीपूजाविधिः ॥*

## अथ व्यासपूजाविधिः

(**व्यासयन्त्र**)

आषाढशुक्लपूर्णिमायां प्रातः सङ्कल्पादिकं विधाय **व्यां व्यासाय नमः गुरवे नमः** वेति मन्त्रेण आवाहनपूर्वकं नाममन्त्रेण पुरुषसूक्तेन वा षोडशोपचारैः यन्त्रमध्ये व्यासं सम्पूज्य आरार्तिक्यं मन्त्रपुष्पाञ्जलिं च कृत्वा विसर्जनादिकं कुर्यात् । गृहे व्यासपूजां विधाय तत्रत्या फलप्रसादादिकं गृहीत्वा गायत्रीगुरुदीक्षागुरुपाठकगुरूणां च समीपे गत्वा गुरून् सम्पूज्य गुरोराशीर्वादैः कृतकृत्यो भूत्वा सुखेन वर्षं निनयेत् । यतो हि गुरुशुश्रूषया पुष्कलेन धनेन विद्याविनिमयेन हि विद्यां प्राप्तुं शक्यते । असम्भवे अतिदूरे वा गुरुस्थितौ मानसोपचारैः सम्पूज्य जगद्गुरोः श्रीकृष्णस्य दर्शनं पूजनञ्च विधाय ब्राह्मणद्वारा टीकाप्रसादादिकं गृहीत्वा विष्णुरूपव्यासध्यानपरो भूत्वा वर्षं निनयेत् ।

*॥ इति व्यासपूजाविधिः ॥*

### शब्दार्थाः

| | | |
|---|---|---|
| प्रत्युत्पन्नमतिः | = | आवश्यकताअनुसारको तत्काल सही उत्तर दिने बुद्धि, तीक्ष्ण बुद्धि |
| आश्रयस्थलम् | = | आश्रय लिने ठाउँ, विश्रामस्थल |
| भद्रमण्डलम् | = | सर्वतो भद्र मण्डल, पद्म या यन्त्रादि मण्डल देवताहरू स्थापनका लागि देवतानुसारको यन्त्र या भद्रचक्र |

| | | |
|---|---|---|
| गुरुः | = | गायत्रीमन्त्र, अनन्तमन्त्र, लक्ष्मीमन्त्र, संन्यासादिमन्त्र वा कुनै पनि मन्त्र लिएको होस् वा आफूलाई केही न केही पढाएको होस् त्यस्तो व्यक्ति गुरु हुनुहुन्छ |
| कृतकृत्यः | = | कृतार्थ, उपकार गरिएको (गुरुद्वारा) आफू सम्झिएर, उपकृत भएको मानेर |
| गुरुशुश्रूषया | = | गुरुको राम्रोसँग सेवा गरेर |
| पुष्कलेन | = | भिक्षाद्वारा |
| विद्याविनिमयेन | = | आफूले जानेको विद्या अर्कालाई दिएर उसले जानेको विद्या आफूले लिएर, विद्या साटासाट गरेर |

## अभ्यासार्थाः प्रश्नाः

१. **सरस्वतीपूजा कदा क्रियते ?**

२. **व्यासपूजा कदा क्रियते ?**

३. **जगद्गुरुः कोऽस्ति ?**

४. **सरस्वत्याः पूजया किं किं प्राप्यते ?**

५. **गुरोरभावे कथं पूजा क्रियते ?**

६. **सरस्वतीपूजाया महत्त्वं प्रदर्शयत ।**

७. **सरस्वतीपूजासामग्रीं लिखत ।**

८. **गुरुपूजाया महत्त्वं प्रदर्शयत ।**

९. **सरस्वतीपूजायाः प्रतिज्ञासङ्कल्पवाक्यं रचयत ।**

१०. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

सरस्वती, व्यासः, जगद्गुरुः, श्वेतवस्त्रम्, लेखनी

११. **पाठाधारेण रिक्तस्थानं पूरयत**

(क) शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं ।

........................... जाड्यान्धकारापहाम् ॥

(ख) ......................... कपिलायाः सुगन्धिकम् ।

सुस्वादु मधुरं देवि ! मधुपर्कं गृहाण भो ॥

(ग) तैलानि च सुगन्धीनि द्रव्याणि विविधानि च ।

मया दत्तानि लेपार्थं .................... ॥

(घ) हिरण्यगर्भगर्भस्थं .................... ।

अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

(ङ) वीणाधरे विपुलमङ्गलदानशीले ।

........................................ ॥

## प्रयोगाभ्यासः

१. पर्यायेण पुष्पाञ्जलिमन्त्रान् परस्परं श्रावयत ।

२. सरस्वतीपूजनेन किं लभ्यते ? परस्परं चर्चां कुरुत ।

३. तावकानां गृहे सरस्वतीपूजा गुरुपूजा भवति न वा ? भवति चेत् का का भिन्नता अनुभूयते ? सङ्कलयत ।

४. गुरोर्महत्त्वं ज्ञातं न वा ? ज्ञातं चेत् गुरुमाध्यमेव कक्षायां पर्यायेण श्रावयत ।

५. विद्यादात्र्याः सरस्वत्याः चित्रं चित्रयत ।

६. सरस्वतीपूजादिने सरस्वत्याः पूजायोजनं कृत्वा सरस्वतीपूजनं गुरोः विज्ञायेत ।

एकादशः पाठः

# शिवरात्रिव्रतपूजाविधिः

## महत्त्वम्

फाल्गुनकृष्णचतुर्दशीतिथौ निशीथव्यापिन्यां महाशिवरात्रिव्रतं क्रियते । अत्र भगवान् शङ्करः प्रधानदेवः । रात्रौ प्रतिप्रहरमत्र विशेषेण पूजा क्रियते । प्रथमप्रहरे शिवनाम्ना द्वितीये शङ्करनाम्ना तृतीये महेश्वरनाम्ना चतुर्थे रुद्रनाम्ना पूजा क्रियते । प्रथमयामे दुग्धेन ईशानमूर्तौ द्वितीये अघोरमूर्तौ दध्ना तृतीये वामदेवमूर्तौ घृतेन चतुर्थे सद्योजातमूर्तौ मधुना संस्नाप्य शिवपूजनं विधीयते ।

प्रतियामं तैलाभ्यङ्गपञ्चामृतोष्णोदकशुद्धोदकगन्धोदकादिभिः अभिषेकः कार्यः । धत्तूरकरवीरकुसुमबिल्वपत्रैश्च शिवपूजनमतिप्रशस्तम् । शिवरात्रिव्रतसम्पादनेन सर्वान् कामान् प्राप्नोति मानवः । शिवरात्रिव्रतमाचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकव्रतमस्ति । एतेन शिवरात्रिव्रताधिकारिणः ब्राह्मणक्षत्रियवैश्यशूद्रस्त्रीबालकयुववृद्धाः सर्वेऽपि भवितुं शक्नुवन्ति । फाल्गुनकृष्णचतुर्दशीतिथेर्निशीथे ज्योतिर्लिङ्गस्य उत्पत्तिसम्भवात् महाशिवरात्रिनाम्ना अयं दिवसो गृह्यते । अस्मिन्नेव दिने शङ्करस्ताण्डवनृत्यं चकार । तेन ध्वनिना ज्ञानविज्ञानयुतसूक्ष्मज्ञानं ब्रह्माण्डे व्याप्तं जातम् ।

महाशिवरात्रिव्रतस्य महत्त्वं न केवलं मानवानां कृत एव अपि तु चराचराणां प्राणिनां कृतेऽपि अस्ति । तथैव समुद्रमन्थनसमये विषपानं कृत्वा विषरूपाग्निना संदग्धो शिवः सुशीतलाय बिल्ववृक्षसमीपं गत्वा बिल्वपत्रैराच्छादितो भूत्वा शीतलतामनुभूत इति शास्त्रैर्ज्ञायते । सर्वकष्टहरशिवः सर्वेषां कल्याणं करोति । अस्य पूजनेन उपासनया जागरणादिना ऐहिकं पारलौकिकं च सुखं सम्प्राप्यते शिवसायुज्यतां च लभ्यते ।

## पूजाविधिः

फाल्गुनकृष्णत्रयोदश्यां कृतैकभक्तश्चतुर्दश्यां कृतनित्यक्रियः पूजासामग्रीं सम्पाद्य सुसज्जितमण्डपे समागत्य आचमनकर्मपात्रनिर्माणादिकं विधाय प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

पूर्वसङ्कल्पसिद्धिरस्तु (अमुक) अहं मम समस्तपापक्षयपूर्वकमक्षयमोक्षफलप्राप्तये तथा श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं शिवप्रीतये नानाविधरोगशोकभयकष्टनिवारणार्थम् (अमुक)

कामनया वा महाशिवरात्रौ शिवव्रतपूजनञ्चाहं करिष्ये। तदङ्गत्वेन दीपकलशगणेशादिदेवान् सम्पूज्य प्रतिप्रहरेषु तद् तद् वस्तुद्वारा तद् तद् देवानां पूजनं रुद्राभिषेकादिकर्म चाहं करिष्ये इति सङ्कल्पयेत् । अशक्तौ शिवप्रीत्यर्थं शिवरात्रौ शिवपूजनमहं करिष्ये इति सङ्कल्प्य व्रताचरणं कर्तव्यम् । ततः प्राणप्रतिष्ठां च विधाय प्रधानदेवशिवपूजां कुर्यात् । पूर्वस्थापितमूर्तौ नर्मदेश्वरशिवलिङ्गे च प्राणप्रतिष्ठाया नैवावश्यकता ।

## पूजासामग्री

चार प्रहर पूजाको निमित्त सामान्य पूजासामग्री भाग ४ । दियो, कलश, गणेश, कर्मपात्र, अर्घ्यको सामाग्री, वस्त्र, जनै, थाली, कलश, प्रतिमा, बेलपत्र, भस्म, धतुरोको फल, बेलपत्रको माला, पञ्चामृत, धूप, बत्ती, कपूर, नैवेद्य, फलफूल, पान, मसला, अलङ्कार । चार प्रहरमा अर्घ दिनको निमित्त बेल, केरा । पञ्चामृत (दुध, दही, घिउ, मह, सखर वा चिनी) अलग-अलग र बनाइएको पनि आदि ।

## अथ शिवरात्रिव्रतपूजाविधिः

अथ व्रती स्नानादिकं विधाय पूजासामग्रीं सम्पाद्य पूजास्थानमागत्यासन उपविश्याचम्य प्राणानायम्य कर्मपात्रं कृत्वा कुशतिलजलान्यादाय

ॐ अद्येत्यादि पूर्वसङ्कल्पं पठित्वा अहं मम श्रीसदाशिवप्रीतिद्वारा समस्तपापक्षयपूर्वकं नानासुखभोगोत्तरमक्षय्यमोक्षपदप्राप्त्यर्थं शिवरात्रिव्रताङ्गत्वेन दीपकलशगणेशपूजनपूर्वकं श्रीसदाशिवपूजनं करिष्ये । इति सङ्कल्प्य दीपादीन् यथाविधि सम्पूज्य ततः षोडशोपचारैः शिवपूजां कुर्यात् । तद्यथा

स्थाल्यामष्टदलं विलिख्य पूर्वादिक्रमेण दशदिक्पालानावाह्य पूजयेत् ।

पूर्वे- भो इन्द्र इहागच्छेह तिष्ठेति ॐ इन्द्राय नमः । इन्द्रं पूजयामि ।

आग्नेये- भो अग्ने इहागच्छेह तिष्ठेति ॐ अग्नये नमः । अग्निं पूजयामि ।

दक्षिणे- भो यम इहागच्छेह तिष्ठेति ॐ यमाय नमः । यमं पूजयामि ।

नैर्ऋत्ये- भो निर्ऋते इहागच्छेह तिष्ठेति ॐ निर्ऋतये नमः । निर्ऋतिं पूजयामि ।

पश्चिमे- भो वरुण इहागच्छेह तिष्ठेति ॐ वरुणाय नमः । वरुणं पूजयामि ।

वायव्ये- भो वायो इहागच्छेह तिष्ठेति ॐ वायवे नमः । वायुं पूजयामि ।

उत्तरे- भो धनद इहागच्छेह तिष्ठेति ॐ धनदाय नमः । धनदं पूजयामि ।

ईशाने- भो ईशान इहागच्छेह तिष्ठेति ॐ ईशानाय नमः। ईशानं पूजयामि।

पूर्वेशानमध्ये- भो ब्रह्मन् इहागच्छेह तिष्ठेति ॐ ब्रह्मणे नमः। ब्रह्माणं पूजयामि।

निर्ऋतिवरुणमध्ये- भो अनन्त इहागच्छेह तिष्ठेति ॐ अनन्ताय नमः। अनन्तं पूजयामि।

इति पाद्यादिभिरुपचारैः सम्पूज्य मध्ये स्वर्णमयीं शिवप्रतिमां संस्थाप्य **ॐ मनो जूति**रिति प्राणान् प्रतिष्ठाप्य ध्यायेत्।

ध्यानम्

**ॐ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं**

**रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्**।

**पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं**

**विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्**॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः ध्यायामि।

आवाहनम्

**ॐ नमस्ते रुद्रम्**...... ।

**ॐ आगच्छ देवदेवश मर्त्यलोकहितेच्छया**।

**पूजयामि विधानेन प्रसन्नः सुमुखो भव**॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः आवाहयामि।

आसनम्

**ॐ यातेरुद्र** ............... ।

**रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम्**।

**आसनं च मया दत्तं गृहाण परमेश्वर**॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः। आसनं समर्पयामि।

पाद्यम्

**ॐ यामिषुम्** ....... ।

**ॐ गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम्**।

**तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम्**॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः। पाद्यं समर्पयामि।

अर्घ्यम्

**ॐ शिवेनवचसा...** ।

**ॐ गन्धोदकेन पुष्पेण चन्दनेन सुगन्धिना** ।

**अर्घ्यं गृहाण देवेश भक्तिं मे ह्यचलां कुरु** ॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ अद्ध्यवोचदधि...** ।

**ॐ कर्पूरोशीरसुरभिशीतलं निर्मलं जलम्** ।

**गङ्गायास्तु समानीतं गृहाणाचमनीयकम्** ॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । आचमनीयं समर्पयामि ।

स्नानम्

**ॐ असौयस्ताम्रो.........**

**ॐ मन्दाकिन्याः समानीतं हेमांभोरुहवासितम्** ।

**स्नानाय ते मया भक्त्या नीरं स्वीक्रियतां विभो** ॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । स्नानीयं समर्पयामि ।

मधुपर्कम्

**ॐ मधुपर्कं महादेव ब्रह्माद्यैः परिकल्पितम्** ।

**मया निवेदितं भक्त्या गृहाण परमेश्वर** ॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । मधुपर्कं समर्पयामि ।

पञ्चामृतम्

**ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः** ।

**सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्** ॥

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । पञ्चामृतं समर्पयामि ।

गन्धोदकस्नानम्

**ॐ मलयाचलसम्भूतं चन्दनागरुमिश्रितम् ।**

**चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । गन्धोदकस्नानं समर्पयामि ।

उद्वर्तनम्

**ॐ नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् ।**

**उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । उद्वर्तनं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ आपोऽस्मान्...** ।

ततः दुग्धेन शिवोपरि धारां दत्त्वा शतरुद्रीयमन्त्रेणाथर्वशीर्षेण शिवमन्त्रेण वा स्नानं कुर्यात् ।

वस्त्रम्

**ॐ असौषोव....** ।

**ॐ वस्त्रं सूक्ष्मं दूकूलं च देवानामपि दुर्लभम् ।**

**गृहाण त्वमुमाकान्त प्रसन्नो भव सर्वदा ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । वस्त्रं समर्पयामि ।

यज्ञोपवीतम्

**ॐ नमोस्तुनील........** ।

**ॐ यज्ञोपवीतं सहजं ब्रह्मणा निर्मितं पुरा ।**

**आयुष्यं बलवर्चस्वमुपवीतं गृहाण मे ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । यज्ञोपवीतं समर्पयामि ।

अलङ्करणम्

**ॐ दिव्यरत्नसमायुक्ता वह्निभानुसमप्रभाः ।**

**गात्राणि शोभयिष्यन्ति ह्यलङ्काराः सुरेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । अलङ्कारान् समर्पयामि ।

चन्दनम्

**ॐ प्रमुञ्चधन्व........ ।**

**ॐ श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।**

**विलेपनं सुरश्रेष्ठ गृहाण परमेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । चन्दनं समर्पयामि ।

अक्षताः

**ॐ अक्षन्नमीमदन्त... ।**

**ॐ श्वेताः कुङ्कुमसंयुक्ता उत्तमाः शालितण्डुलाः ।**

**मया निवेदिता भक्त्या गृहाण परमेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । अक्षतान् समर्पयामि ।

भस्म

**ॐ त्र्यम्बकं यजामहेसुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । भस्मानुलेपनं समर्पयामि ।

पुष्पाणि

**ॐ विज्यन्धनुः... ।**

**ॐ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।**

**मयानीतानि पुष्पाणि गृहाण परमेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । पुष्पाणि समर्पयामि ।

बिल्वपत्रम्

**ॐ शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।**

**मा द्यावापृथिवीऽअभिशोचीर्मान्तरिक्षं मा वनस्पतीन् ॥**

**ॐ त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुधम् ।**

**त्रिजन्मोत्थं हरेत्पापं बिल्वपत्रं शिवार्पणम् ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । बिल्वपत्रं समर्पयामि ।

पुष्पमाला

**ॐ नानासुगन्धसंयुक्ता नानापुष्पविमिश्रिता ।**

**मया निवेदिता माला ग्राह्या तव महेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । पुष्पमालां समर्पयामि ।

बिल्वपत्रमाला

**ॐ सूत्रेण ग्रथितं माल्यं नानापुष्पविमिश्रितम् ।**

**मया निवेदिता माला ग्राह्या तव महेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । बिल्वपत्रमालां समर्पयामि ।

धूपः

**ॐ यातेहेतिर्म्मी... ।**

**ॐ वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । धूपम् आघ्रापयामि ।

दीपः

**ॐ परितेधन्वनो... ।**

**ॐ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**

**दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ अवतत्यधनुष्ट्वम्.... ।**

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**भूतानां जीवनं चैव नैवेद्यं प्रतिगृह्यताम् ॥**

**अमृतै रचितं दिव्यं नानारूपविनिर्मितम् ।**

**मिष्टान्नं विविधं देव गृहाण मम भावतः ॥**

**मोदकं स्वादु संयुक्तं शर्करादि विमिश्रितम् ।**

**सुरम्यं भोजनं दिव्यं मया दत्तं प्रगृह्यताम् ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । नैवेद्यं निवेदयामि ।

जलम्

**ॐ जलं च शीतलं स्वच्छं सुगन्धिं सुमनोहरम् ।**

**मया निवेदितं भक्त्या गृहाण परमेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । जलं समर्पयामि ।

करोद्वर्तनम्

**ॐ गन्धकर्पूरसंयुक्तं कस्तूर्यादिविमिश्रितम् ।**

**करोद्वर्तनकं दिव्यं गृहाण परमेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । करोद्वर्तनं समर्पयामि ।

फलम्

**ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।**

**बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥**

**ॐ इदं फलं मया देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । फलानि समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लिदलैर्युतम् ।**

**एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भः समवर्तताग्रे... । ॐ हिरण्यगर्भगर्भस्थं... ।**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । दक्षिणाद्रव्यं समर्पयामि ।

नीराजनम्

**ॐ पञ्चवर्तिसमायुक्तं गोघृतेन च पूरितम्।**

**नीराजनं मया दत्तं गृहाण भगवन् हर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः। नीराजनं समर्पयामि।

कर्पूरार्तिक्यम्

**ॐ इदꣳहविः प्रजननं मेऽअस्तु दश वीरꣳसर्वगणꣴस्वस्तये।**

**आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि।**

**अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतोऽअस्मासु धत्त ॥**

**ॐ कदलीगर्भसम्भूतं घनसारं शशिप्रभम्।**

**आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः। कर्पूरारार्तिक्यं दर्शयामि।

प्रदक्षिणा

**ॐ सप्तास्यासन्...** । **ॐ यानि कानि...** ।

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः। प्रदक्षिणां समर्पयामि।

पुष्पाञ्जलिः

**ॐ मानस्तोके...** ।

**ॐ नानासुगन्धिपुष्पाणि देशकालोद्भवानि च।**

**पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वर ॥**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः। पुष्पाञ्जलिं समर्पयामि।

क्षमापनम्

**ॐ नमः शिवाय शान्ताय कारणत्रयहेतवे।**

**निवेदयामि चात्मानं त्वं गतिः परमेश्वर ॥**

**ॐ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।**

**दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥**

**श्रूयतां धर्मसर्वस्वं शिवरात्रौ शिवार्चनम्।**

**व्रतयज्ञविधानेन स्वर्गपुण्येन कर्मणा ॥**

**कृत्वा स्नानं शुचिर्भूत्वा धौतवस्त्रसमन्वितः ।**

**स्थापयेद्देवदेवेशं मन्त्रैर्वेदसमुद्भवैः ।**

**ततः पूजा प्रकर्तव्या पूर्वोक्तविधिना ततः ।**

ॐ भूर्भुवः स्वः श्रीभगवते साम्बसदाशिवाय नमः । क्षमापनपूर्वकं नमस्करोमि ।

विशेषार्घ्यम्

प्रथमप्रहरे बिल्वयुक्तं विशेषार्घ्यं दद्यादनेन मन्त्रेण

**ॐ नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर ।**

**पूजां गृहाण मद्दत्तां महेश प्रथमे पदे** ॥ इति प्रथमप्रहरपूजा ॥

द्वितीयप्रहरेऽपि अनेनैव विधिना षोडशोपचारैः पूजयेत् ।

द्वितीयप्रहरे विशेषः

**पूर्वे नन्दिमहाकालौ शृङ्गिभृङ्गी च दक्षिणे ।**

**वृषस्कन्दौ पश्चिमे च देशकालौ तथोत्तरे ॥**

**गङ्गा च यमुना चैव पार्श्वे चैव व्यवस्थिते** । इति ।

पूजान्ते बीजपूरेणार्घ्यं दद्यादनेनमन्त्रेण

**ॐ नमोऽव्यक्ताय सूक्ष्माय नमस्ते त्रिपुरान्तक ।**

**पूजां गृहाण देवेश यथाशक्त्युपपादितम् ॥**

तृतीयप्रहरेऽपि पूजां समाप्य रम्भाफलेनार्घ्यं दद्यात् । मन्त्रस्तु

**ॐ बद्धोऽहं विविधैः पाशैः संसारभवबन्धनैः ।**

**पतितं मोहजालं मां त्वं समुद्धर शङ्कर ॥**

चतुर्थप्रहरे आद्यवत् पूजां कृत्वाऽर्घ्यं दद्यात्

**ॐ नमः शिवाय शान्ताय सर्वपापहराय च ।**

**शिवरात्रौ मया दत्तं गृहाणार्घ्यं नमोऽस्तु ते ॥**

ततः प्रभाते स्नात्वा विधिवत्पूजां विधाय विशेषार्घ्यं दद्यादनेन मन्त्रेण

**ॐ दुःखदारिद्रचभावैश्च दग्धोऽहं पार्वतीपते ।**

**मां वै त्राहि महादेव किं न जानासि शङ्कर ॥**

**किं न जानासि देवेश तावद् भक्तिं प्रयच्छ मे ।**

**स्वपादाग्रतले देव दास्यं देहि जगत्पते ॥**

इत्यर्घ्यं दत्त्वा देवान् विसृज्य पूजां समापयेत् । ततो ब्राह्मणाय दक्षिणां दत्त्वा भोजयेत् । ब्राह्मणानुज्ञया स्वयमपि सहृद्युक्तो भुञ्जीत । ततो यथासुखं विहरेत् ।

*॥ इति शिवरात्रिपूजा ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| निशीथव्यापिनी | = | मध्यरात्रि व्यापी (तिथि) |
| प्रतियामम् | = | प्रत्येक प्रहरमा |
| धत्तूरः | = | धतुरो |
| अतिप्रशस्तम् | = | अत्यन्तै राम्रो, प्रशंसनीय |
| विषरूपाग्निः | = | विषरूपी आगो |
| संदग्धः | = | जलेको, अत्यन्त डाहा भएको अवस्था |
| शिवसायुज्यताम् | = | भगवान् शिवसँग नै मिल्ने मुक्तिको प्रकार |
| नर्मदेश्वरः | = | नर्मदा नदीमा पाइने शिवलिङ्ग, शिला |
| वाणलिङ्ग | = | वाण नामको लिङ्ग |

## अभ्यासार्थाः प्रश्नाः

१. **शिवरात्रिव्रतं कदा कस्मिन् काले क्रियते ?**

२. **प्रतिप्रहरेषु केन केन नाम्ना शिवपूजनं क्रियते ?**

३. **कथं महाशिवरात्रिनाम्ना इयं तिथिः प्रसिद्धा ?**

४. **प्रतिप्रहरेषु केन केन वस्तुना शिवं स्नाप्यते ?**

५. **ताण्डवनृत्यध्वनिना ब्रह्माण्डे किं जातम् ?**

६. **शिवरात्रिव्रतस्य महत्त्वं लिखत ।**

७. **बिल्वपत्रस्य महत्त्वं कथं जातम् ? लिखत ।**

८. **प्रतिज्ञासङ्कल्पवाक्यं रचयत ।**

९. **कुत्र कुत्र प्राणप्रतिष्ठाया आवश्यकता नास्ति ? लिखत ।**

१०. **शिवरात्रिव्रतकरणेन के के प्राप्यन्ते ? लिखत ।**

**११. शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

महाशिवरात्रिः, बिल्वपत्रम्, निशीथः, अभिषेकः, ताण्डवनृत्यम् ।

**१२. रिक्तस्थानं पूरयत**

(क) ॐ ध्यायेन्नित्यं महेशं ............................ ।

रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ॥

पद्मासीनं समन्तात्स्तुतममरगणैः .................... ।

.................... निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

(ख) ॐ त्रिदलं त्रिगुणाकारं .................... ।

त्रिजन्मोत्थं हरेत्पापं ........................ ॥

**१३. परस्परं मेलयत**

| | |
|---|---|
| शिवः | अघोरमूर्तौ स्नानम् । |
| दध्ना | सद्योजातमूर्तौ स्नानम् । |
| मधुना | तृतीयप्रहरस्य देवः । |
| दुग्धेन | चतुर्थप्रहरस्य देवः । |
| रुद्रः | प्रथमप्रहरस्य देवः । |
| महेश्वरः | ईशानमूर्तौ स्नानम् । |
| | द्वितीयप्रहरस्य देवः |

**प्रयोगाभ्यासः**

(क) शिक्षकसहयोगेन शिवताण्डवनृत्यविषये ज्ञानं कुरुत ।

(ख) प्रतिप्रहरेषु समर्पणीयानि वस्तूनि शिवस्य नामानि च ज्ञायेत ।

(ग) शिवस्य ध्यानमन्त्रं शुद्धतया ज्ञानाय शिक्षकसहयोगेन परस्परं श्रावयत ।

(घ) अर्घ्यदानमन्त्राः परस्परं श्रावयत ।

(ङ) महाशिवरात्रिपर्वणि समीपस्थशिवमन्दिरं गत्वा शिक्षकात् महाशिवरात्रिपर्वणो ज्ञानलाभं कुरुत ।

(च) विद्यालये कक्षायां वा शिवरात्रिपूजाया आयोजनां कुरुत ।

(छ) पञ्चमुखशिवस्य मुखनामानि शिक्षकमाध्यमेन ज्ञायेत ।

द्वादशः पाठः

# रामनवमीव्रतपूजाविधिः

## महत्त्वम्

मध्याह्नव्यापिन्यां चैत्रशुक्लनवमीतिथौ रामनवमीव्रतं क्रियते । पुनर्वसुयोगे चातिप्रशस्तोयं तिथिः । अस्यामेव तिथौ मर्यादापुरुषोत्तमश्रीरामस्य जन्म मध्याह्ने कर्कटलग्ने जातः । लोकशिक्षणाय मर्यादास्थापनाय च भगवतः श्रीरामस्य जन्म अभवत् । मातृपितृगुरुजनानामन्येषां च मान्यजनानां महत्त्वमत्यधिकं वर्तते । एतद्दर्शनाय प्राप्तमपि युवराजपदं त्यक्त्वा श्रीरामो वनवासमपि स्वीकृतवन्तः ।

एतेन सनातनसंस्कृतौ मान्यजनानां मातृपितृचरणानामग्रे तेषां मनसि कष्टं दत्वा प्राप्तं राजपदमपि न सुखाय न वा परलोकाय भवतीति लोकशिक्षणाय मानवमर्यादास्थापनाय च श्रीरामेण दृष्टान्तः प्रदर्शितो वर्तते । लोकवार्तामाध्यमेन गर्भवतीं प्रेयसीं पत्नीं त्यक्त्वा राजशासनस्य महत्त्वं प्रजारञ्जनाय हि न स्वस्य सुखाय न वा मर्यादायाः उल्लङ्घनाय इति शिक्षा लोके स्थापिता वर्तते । राजनीतिज्ञानाय च रामचरित्रयुक्तरामायणग्रन्थः पठनीयः । भ्रातृषु प्रेम कीदृशो भवेत् ? राजव्यवस्था च कीदृशी स्यात् ? इत्यादिज्ञानाय श्रीरामचरित्रस्य महत्त्वं सर्वदापि नवीनमेव । सपरिवारस्य श्रीरामस्य पूजामाध्यमेन कथाश्रवणेन च **"रामवत् वर्तितव्यम्"** इति भावं हृदि संस्थाप्य मान्यजनेषु समाजे राज्ये प्रशासनिकक्षेत्रेषु च रामवत् व्यवहर्तव्यम् इति ज्ञानं प्राप्यते ।

## पूजाविधिः

चैत्रशुक्लनवम्यां प्रातर्नित्यक्रियां कृत्वा पूजासामग्रीं सम्पाद्य आचमनकर्मपात्रनिर्माणादिकं विधाय सपरिवारश्रीरामपूजनार्थं मण्डपं सज्जीकृत्य सपत्नीको यजमानः प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

पूर्वसङ्कल्पसिद्धिरस्तु .......... अहं मम सपरिवारस्य दुःखदारिद्रचभयरोग-

---

**शिक्षकनिर्देशनम्**

१. सपरिवारस्य श्रीरामस्य चित्रं चित्रणाय अभिप्रेरयत ।
२. विशेषमन्त्राणां कण्ठस्थकरणाय ह्रस्वदीर्घसहितोच्चारणशैलीं शिक्षयत ।
३. पूजायां वैदिकतान्त्रिकमन्त्रप्रयोगप्रकारं च शिक्षयत ।

शोकादिसकलाशुभफलनिवारणपूर्वकं श्रुतिस्मृतिपुराणोक्तशुभफलप्राप्त्यर्थं सर्वेषां परिवाराणां श्रीरामप्रीतिद्वारा वैकुण्ठलोकप्राप्तये यथाज्ञानेन यथोपलब्धवस्तुद्वारा सपरिवारस्य श्रीरामस्य पूजनं श्रीरामनवमीव्रतञ्चाहं करिष्ये । तदङ्गत्वेन दीपकलशगणेशादिसहितमण्डपस्थान् देवान् सम्पूज्य यथाकाले श्रीरामप्रतिमादानं करिष्ये । एवं सङ्कल्प्य देवान् सम्पूज्य प्रधानदेवस्य सपरिवारसहितस्य श्रीरामस्य पूजनं कुर्यात् ।

## पूजासामग्री

श्रीरामपरिवारको प्रतिमा, जनै, सुपारी, अशोकको फूल, चढाउने कपडा, फल, फूल, नैवेद्य, जनै, पूजाको सामग्री १ भाग, सौभाग्य सामग्री आदि ।

## अथ रामनवमीव्रतपूजाविधिः

अथ व्रती नद्यादौ गत्वा स्नानादिकं विधाय शुद्धभूमौ मण्डपं कारयित्वा ध्वजतोरणादिकं च विस्तार्य सामग्रीं स्वस्वस्थाने संस्थाप्याचम्य प्राणायामं कुर्यात् ।

ततः कर्मपात्रं कृत्वा कुशतिलजलान्यादाय

ॐ अद्येत्यादि मासपक्षाद्युल्लिख्य अहं मम समस्तपापक्षयकामः श्रीरामप्रीतये रामनवमीव्रतं करिष्ये । तदङ्गत्वेन दीपकलशगणेशपूजनपूर्वकं यथासम्पादितोपचारैः श्रीरामपूजां करिष्ये । इति सङ्कल्प्य फलपुष्पाक्षतसहितं जलपूर्णताम्रपात्रं गृहीत्वा

**ॐ उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव ।**

**तेन प्रीतो भव त्वं मे संसारात्त्राहि मां हरे ॥**

इति मन्त्रेण पात्रस्थं जलं भूमौ क्षिपेत् ।

ततो राममन्त्रेण षडङ्गन्यासं विधायार्घस्थापनपूर्वकं दीपादीन् सम्पूज्य प्रार्थयेत् । ततः शक्तितः हैमीं (रजतमयीं वा यथासम्भवम्) रामप्रतिमां कृत्वा अग्न्युत्तारणपूर्वकम् अष्टदलमध्ये संस्थाप्य **ॐ मनो जूति**रिति मन्त्रं पठन् प्राणप्रतिष्ठां कुर्यात् ।

ततो ध्यानम्

**ॐ कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम् ।**

**दक्षिणाङ्गे दशरथं पुत्रावेक्षणतत्परम् ॥**

**पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभम् ।**

**पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ॥**

**अग्रेऽव्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम्** । इति ध्यात्वा षोडशापचारैः पूजयेत् । तद्यथा

आवाहनम्

**ॐ सहस्रशीर्षा...।**

**ॐ आवाहयामि विश्वेशं जानकीवल्लभं प्रभुम्।**

**कौसल्यातनयं विष्णुं श्रीरामं प्रकृतेः परम्॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः। आवाहयामि।

सन्निधापनम्

**ॐ श्रीरामागच्छ भगवन् रघुवीर नृपोत्तम।**

**जानक्या सह राजेन्द्र सुस्थिरो भव सर्वदा॥**

**रामचन्द्र महेष्वास रावणान्तक राघव।**

**यावत्पूजां समाप्स्येऽहं तावत्त्वं सन्निधो भव॥**

सम्मुखीकरणम्

**ॐ रघुनायकराजर्षे नमो राजीवलोचन।**

**रघुनन्दन मे देव श्रीराम सम्मुखो भव॥**

आसनम्

**ॐ पुरुषऽएव...।**

**ॐ राजाधिराज राजेन्द्र रामचन्द्र महीपते।**

**रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः। आसनं समर्पयामि।

पाद्यम्

**ॐ एतावानस्य...।**

**ॐ त्रैलोक्यपावनानन्त नमस्ते रघुनायक।**

**पाद्यं गृहाण राजर्षे नमो राजीवलोचन॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः। पाद्यं समर्पयामि।

अर्घ्यम्

**ॐ त्रिपादूर्ध्व...।**

**ॐ परिपूर्ण परानन्द नमो रामाय वेधसे ।**

**गृहाणार्घ्यं मया दत्तं कृष्ण विष्णो जनार्दन ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ ततो विराड... ।**

**ॐ नमः सत्याय शुद्धाय नित्याय ज्ञानरूपिणे ।**

**गृहाणाचमनं नाथ सर्वलोकैकनायक ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । आचमनीयं समर्पयामि ।

स्नानम्

**ॐ ब्रह्माण्डोदरमध्यस्थैस्तीर्थैश्च रघुनन्दन ।**

**स्नापयिष्याम्यहं भक्त्या त्वं गृहाण जनार्दन ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । स्नानं समर्पयामि ।

मधुपर्कः

**ॐ नमः श्रीवासुदेवाय तत्त्वज्ञानस्वरूपिणे ।**

**मधुपर्कं गृहाणेदं जानकीपतये नमः ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । मधुपर्कं समर्पयामि ।

पञ्चामृतम्

**ॐ पञ्चनद्यः... ।**

**ॐ पञ्चामृतं मयानीतं पयोदधि घृतं मधु ।**

**शर्करामधुसंयुक्तं राम त्वं प्रतिगृह्यताम् ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ आपोऽअस्मान्... ।**

पुष्पं धूपं दीपं नैवेद्यं समर्प्य सम्प्रार्थ्य निर्माल्यं विसृज्य पुनः स्नानम्

**ॐ ब्रह्माण्डोदरमध्यस्थैस्तीर्थैश्च रघुनन्दन ।**

**स्नापयिष्याम्यहं भक्त्या त्वं गृहाण जनार्दन ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । स्नानं समर्पयामि ।

गन्धोदकस्नानम्

**ॐ गन्धद्वारां...** ।

**ॐ मलयाचलसम्भूतं कर्पूरादिसुवासितम्** ।

**चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम्** ॥

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । गन्धोदकस्नानं समर्पयामि ।

उद्वर्तनम्

**ॐ नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम्** ।

**उद्वर्तनं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम्** ॥

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । उद्वर्तनं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ आपोऽअस्मान्...** ।

ततः **सहस्रशीर्षे**त्यादि पुरुषसूक्तेन विष्णुसूक्तैश्चाभिषिञ्चेत् ।

वस्त्रम्

**ॐ तस्माद्यज्ञात्सर्वहुतः...** ।

**ॐ तप्तकाञ्चनसंकाशं पीताम्बरमिदं हरे** ।

**संगृहाण जगन्नाथ रामचन्द्र नमोऽस्तु ते** ॥

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । वस्त्रं समर्पयामि ।

यज्ञोपवीतम्

**ॐ तस्माद्यज्ञात्सर्वहुत ऋचः...** ।

**ॐ श्रीरामाच्युत यज्ञेश श्रीधरानन्त राघव** ।

**ब्रह्मसूत्रं सोत्तरीयं गृहाण रघुनन्दन** ॥

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । यज्ञोपवीतं समर्पयामि ।

चन्दनम्

**ॐ तं यज्ञम्...** ।

**ॐ कुङ्कुमागरुकस्तूरीं कर्पूरं चन्दनं तथा ।**

**तुभ्यं दास्यामि राजेन्द्र श्रीराम स्वीकुरु प्रभो ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । चन्दनं समर्पयामि ।

अक्षताः

**ॐ अक्षन्नमीमदन्त...** ।

**ॐ अक्षताः परमा दिव्याः कुङ्कुमाक्ताः सुशोभनाः ।**

**भवदुःखविनाशार्थं गृहाण रघुनन्दन ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । अक्षतान् समर्पयामि ।

पुष्पाणि

**ॐ यत्पुरुषं...** ।

**ॐ तुलसीकुन्दमन्दारजातीपुन्नागचंपकैः ।**

**कदम्बकरवीरैश्च कुसुमैः शतपत्रकैः ॥**

**नीलाम्बुजैर्बिल्वपत्रैरर्चयेद्राघवं विभुम् ।**

**पूजयिष्याम्यहं भक्त्या सङ्गृहाण जनार्दन ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । पुष्पाणि समर्पयामि ।

तुलसीपत्रम्

**ॐ तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।**

**भवमोक्षप्रदां तुभ्यमर्चयामि हरिप्रियाम् ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । तुलसीपत्रं समर्पयामि ।

अङ्गपूजा

ॐ श्री रामचन्द्राय नमः पादौ पूजयामि । ॐ राजीवलोचनाय नमः गुल्फौ पूजयामि ।

ॐ रावणान्तकाय नमः जानुनी पूजयामि । ॐ वाचस्पतये नमः ऊरू पूजयामि ।

ॐ विश्वरूपाय नमः जङ्घे पूजयामि । ॐ लक्ष्मणाग्रजाय नमः कटीं पूजयामि ।

ॐ विश्वमूर्तये नमः मेढ्रं पूजयामि । ॐ विश्वामित्रप्रियाय नमः नाभिं पूजयामि ।
ॐ परमात्मने नमः हृदयं पूजयामि । ॐ श्रीकण्ठाय नमः कण्ठं पूजयामि ।
ॐ सर्वास्त्रधारिणे नमः बाहू पूजयामि । ॐ रघूद्वहाय नमः मुखं पूजयामि ।
ॐ पद्मनाभाय नमः जिह्वां पूजयामि । ॐ दामोदराय नमः दन्तान् पूजयामि ।
ॐ सीतापतये नमः ललाटं पूजयामि । ॐ ज्ञानगम्याय नमः शिरः पूजयामि ।
ॐ सर्वात्मने नमः सर्वाङ्गं पूजयामि ।

धूपः

**ॐ ब्राह्मणोऽस्य... ।**

**ॐ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।**
**रामचन्द्र महीपाल धूपोऽयं प्रतिगृह्यताम् ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । धूपम् आघ्रापयामि ।

दीपः

**ॐ चन्द्रमा मनसः... ।**

**ॐ ज्योतिषां पतये तुभ्यं नमो रामाय वेधसे ।**
**गृहाण दीपकं चैव त्रैलोक्यतिमिरापहम् ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ नाभ्याऽआसीत्... ।**

**ॐ इदं दिव्यान्नममृतं रसैः षड्भिः समन्वितम् ।**
**लेह्यं पेय्यं च नैवेद्यं सीतेश प्रतिगृह्यताम् ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । नैवेद्यं निवेदयामि ।

आचमनीयम्

**ॐ यत्पुरुषेण... ।**

**ॐ जलं च शीतलं स्वच्छं नित्यं शुद्धं मनोहरम् ।**
**पानीयं ते प्रयच्छामि गृहाण रघुनायक ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । आचमनीयं समर्पयामि ।

फलम्

**ॐ इदं फलं मया देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । फलं समर्पयामि ।

ताम्बूलम्

**ॐ नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम् ।**

**ताम्बूलं गृह्यतां राम कर्पूरादिसमन्वितम् ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । दक्षिणां समर्पयामि ।

दर्पणम्

**ॐ दर्शनेन त्वमादर्श नूनं मङ्गलदायक ।**

**सौर्यसौभाग्यसत्कीर्तिनिर्मलज्ञानदो भव ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । दर्पणं दर्शयामि ।

चामरम्

**ॐ शशाङ्ककरसङ्काश हिमडिण्डिरपाण्डुर ।**

**प्रोत्सारयाशु दुरितं चामरामरवल्लभ ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । चामरं दोलयामि ।

ततो यथाशक्ति जपं कृत्वा समर्पयेत् ।

नीराजनम्

**ॐ मङ्गलार्थं महीपाल नीराजनमिदं हरे ।**

**सङ्गृहाण जगन्नाथ रामचन्द्र नमोऽस्तु ते ॥**

**ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहाः। अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा। ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः। नीराजनं समर्पयामि।

कर्पूरदीपः

**ॐ आरार्तिक्यं तव पुरः करोम्युज्ज्वलदीपकैः।**

**मणिकर्पूरतैलाज्यसम्भवैः शक्तिसम्मितैः॥**

**ॐ इदꣳहविः प्रजननं मेऽअस्तु दशवीरꣳ सर्वगणꣳस्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि। अग्निः प्रजां बहुलाम्मे करोत्वन्नं पयो रेतोऽअस्मासु धत्त॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः। कर्पूरदीपं दर्शयामि।

नमस्कारः

**ॐ नमस्कारान्प्रकुर्वेऽहं मनसा वचसा दृशा।**

**भूमिसंलग्नहृत्पादललाटकरजानुकान्॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः। नमस्करोमि।

प्रदक्षिणा

**ॐ सप्तास्यासन्...।**

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च।**

**तानि तानि विनश्यन्तु प्रदक्षिणपदे पदे॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः। प्रदक्षिणां समर्पयामि।

पुष्पाञ्जलिः

**ॐ यज्ञेन यज्ञ...।**

**ॐ नमो देवाधिदेवाय रघुनाथाय शार्ङ्गिणे।**

**चिन्मयानन्तरूपाय सीतायाः पतये नमः॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः। पुष्पाञ्जलिं समर्पयामि।

ततः अशोककुसुमैरर्घ्यं दद्यात्

**ॐ दशाननवधार्थाय धर्मसंस्थापनाय च।**

**राक्षसानां वधार्थाय दैत्यानां निधनाय च॥**

**परित्राणाय साधूनां जातो रामः स्वयं हरिः ।**

**गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । अर्घ्यं निवेदयामि ।

इत्यर्घ्यं दत्त्वा प्रार्थयेत्

**ॐ नृत्यैर्गीतैश्च वाद्यैश्च पुराणपठनादिभिः ।**

**प्रेमोपचारैरखिलैः सन्तुष्टो भव राघव ॥**

ॐ सपरिवाराय श्रीरामचन्द्राय नमः । प्रार्थनापूर्वकं नमस्करोमि प्रणमामि ।

ततो ब्राह्मणं सम्पूज्य वायनं (पूर्णपात्रं) दद्यात्

**ॐ वायनं वंशपात्रस्थं सवस्त्रं दक्षिणान्वितम् ।**

**ददामि द्विजमुख्याय व्रतसाङ्गत्वसिद्धये ॥**

ततो दक्षिणां दत्त्वा **यान्तु देवे**ति देवान् विसृज्य प्रार्थयेत्

**ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**

**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥**

**आवाहनं न जानामि... । मन्त्रहीनं क्रियाहीनं... ।**

अनेन यथाज्ञानकृतेन पूर्वोत्तराराधनेन भगवान् श्रीरामचन्द्रः प्रीयताम् न मम । ॐ तत्सत् ब्रह्मार्पणमस्तु ।

ततः **ॐ कायेनवाचा...** इति कर्मेश्वरार्पणं कुर्यात् ।

*॥ इति रामनवमीपूजा ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| लोकशिक्षणाय | = | समाजमा शिक्षा दिनका लागि |
| मर्यादास्थापनाय | = | आदर्श एवम् अनुकरणीय व्यक्तित्व स्थापनाका लागि, सत् आचरण सिकाउन |
| लोकवार्तामाध्यमेन | = | आफ्ना वरिपरिका समाजमा सुनेका कुराका माध्यमले |
| प्रजारञ्जनाय | = | जनताको खुसीका लागि |
| युवराजपदम् | = | युवराज पदलाई |

## अभ्यासार्थाः प्रश्नाः

१. रामनवमीव्रतं कदा क्रियते ?

२. श्रीरामस्य जन्म कस्मै कारणाय अभवत् ?

३. श्रीरामेण किं प्रदर्शितं वर्तते ?

४. "रामवद् वर्तितव्यम्" अस्य किं तात्पर्यम् ?

५. राजनीतिज्ञानाय कः ग्रन्थः पठनीयः ?

६. श्रीरामस्य माध्यमेन जनाः किं शिक्षयन्ति ?

७. श्रीरामनवमीव्रतस्य प्रयोगविधिं प्रदर्शयत ?

८. राजनीतेर्महत्त्वप्रदर्शनाय श्रीरामेण कानि कानि कार्याणि कृतानि ?

९. प्रतिज्ञासङ्कल्पवाक्यं रचयत ।

१०. अधस्तान् शब्दान् प्रयुज्य वाक्यानि रचयत

मर्यादा, युवराजपदम्, पुनर्वसू, मध्याह्नकालः, प्रेम

११. पाठाधारेण रिक्तस्थानं पूरयत

(क) ॐ आवाहयामि विश्वेशं ................. ।
.................... श्रीरामं प्रकृतेः परम् ॥

(ख) ॐ .................... रघुवीर नृपोत्तम ।
जानक्या सह राजेन्द्र .................... ॥

(ग) ॐ रघुनायक राजर्षे .................... ।
रघुनन्दन मे देव .................... ॥

(घ) ॐ दशाननवधार्थाय .................... ।
राक्षसानां वधार्थाय दैत्यानां निधनाय च ॥

(ङ) परित्राणाय साधूनां जातो रामः स्वयं हरिः ।
.................... भ्रातृभिः सहितोऽनघ ।

**१२. परस्परं मेलयत**

| | |
|---|---|
| ॐ सीतापतये नमः | पादौ पूजयामि |
| ॐ दामोदराय नमः | सर्वाङ्गं पूजयामि |
| ॐ परमात्मने नमः | नाभिं पूजयामि |
| ॐ श्रीरामचन्द्राय नमः | हृदयं पूजयामि |
| ॐ सर्वात्मने नमः | दन्तान् पूजयामि |
| ॐ विश्वामित्रप्रियाय नमः | ललाटं पूजयामि |
| | मुखं पूजयामि |

## प्रयोगाभ्यासः

(क) पृथिव्यां श्रीरामचन्द्रस्य अवतरणविषये गुरोः सकाशाद् ज्ञानं विमृशत ।

(ख) अर्घ्यदानमन्त्रान् कण्ठस्थं कुरुत ।

(ग) सम्भवश्चेत् गुरुणा सह श्रीराममन्दिरं गत्वा श्रीरामस्य विषये विशेषज्ञानलाभं कुरुत ।

(घ) शुद्धतया मन्त्रोच्चारणार्थं गुरुसहयोगेन शिक्षयत ।

(ङ) षोडशोपचारपूजाक्रमस्य ज्ञानं कुरुत ।

त्रयोदशः पाठः

# जन्मोत्सवपूजाविधिः

## महत्त्वम्

प्रतिवर्षं चान्द्रमानेन उदयव्यापिन्यां तिथौ मार्कण्डेयाद्यष्टचिरञ्जीवीनां पूजनपूर्वकं स्वजन्मकालिकसंवत्सरमासनक्षत्रतिथिराशीशादीनां पूजनं तथा स्वस्य दीर्घायुष्यनैरुज्यताप्राप्तये मार्कण्डेयाद्यष्टचिरञ्जीवीनां प्रार्थनादिसम्पादनकृत्यमेव जन्मोत्सवपूजाविधिरिति कथ्यते । जन्मदिवसे नारायणाग्निप्रजापतिपितृगुरूणाञ्च पूजनेन देवपितृमान्यजनानां प्रति कृतज्ञताज्ञापनम् आशीर्वादप्राप्तिश्च भवति । जन्मतिथौ सूर्यादिनवग्रहाणां पूजनेन वर्षपर्यन्तं ग्रहभूतप्रेतपिशाचादीनां दोषनिवारणं भवति । मार्कण्डेयाद्यष्टचिरञ्जीवीनां पूजनेन दीर्घायुष्यप्राप्तिर्भवति । षष्ठीकायै दधिभक्तसमर्पणेन आयुरारोग्यैश्वर्यकल्याणधनधान्यादीनि प्राप्यन्ते ।मार्कण्डेयाय समर्पितं सतिलगुडमिश्रितपयःपानेन आयुर्वृद्धिस्तथा पोटलिकाबन्धनद्वारा बलप्राप्तिस्तथा मनोरथश्च पूर्तिर्भवति ।

## पूजासामग्री

सामान्य पूजाको सामग्री - भाग १, कर्मपात्र, अर्घ, पञ्चामृत, दियो, कलश, गणेश, थाली, पञ्चपात्र, जनै, सुपारी, वस्त्र, धूप, वत्ती, नैवेद्य, फलफूल, पान, कपुर, दही, अक्षता, दुध, तिल, कुश, दुबो, सर्सिऊँ, नीम, गोरोचन, गोकुलधूप-सालधूप, आदि ।

## शिक्षणनिर्देशनम्

जन्मोत्सवपूजायां प्रयुक्तानां मन्त्राणां शुद्धोच्चारणाय प्रेरणां कुरुत । विद्यार्थिनमाचार्यपदे संस्थाप्य जन्मोत्सवपूजाविधिसम्पादनाय उत्प्रेरयत ।

---

पादटिप्पणी अत्र जन्मतिथिरौदयिकी ग्राह्या ।

**युगाद्यावर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।**

**रवेरुदयमिच्छन्ति न तत्र तिथियुग्मता** ॥ इति कृत्यतत्त्वार्णववचनात् ।

**मृते जन्मनि सङ्क्रान्तौ श्राद्धे जन्मदिने तथा ।**

**अस्पृश्यस्पर्शने चैव न स्नायादूष्णवारिणा** ॥ तिथितत्त्वे स्कान्दे ।

**खण्डनं नखरोमाणां मैथुनाध्वगमौ तथा ।**

**आमिषं कलहं हिसां वर्षवृद्धौ विवर्जयेत्** ॥ तत्रैव दीपिकायाम् ।

**अथ जन्मोत्सवपूजाविधिः**

तत्र कर्ता सर्वौषधिपूर्वकं स्नात्वा कृतनित्यक्रियः शुचिराचान्तः प्राङ्मुख उदङ्मुखो वा उपविश्य सङ्कल्पं कुर्यात् । तद्यथा

**प्रतिज्ञासङ्कल्पः**

ॐ अद्येत्यादि देशकालादीन् सङ्कीर्त्य अमुकगोत्रस्य मम जन्मदिवसे वर्षवृद्धौ जन्मोत्सवकर्मणि दीर्घायुरारोग्यैश्वर्योदयाद्यभिवृद्धयर्थं दीपकलशगणेशपूजनपूर्वकं मार्कण्डेयाद्यष्टचिरञ्जीविनां महाषष्ठीकायाश्च यथासम्पादितोपचारैः पूजनमहङ्करिष्ये । इति सङ्कल्प्य ब्राह्मणवरणं पुण्याहवाचनं च विधाय दीपकलशगणेशान् यथाविधि सम्पूजयेत् । तत्र मङ्गलाभिधानकलशे गुरुं नारायणदेवम् अग्निं प्रजापतिम् पितॄन् स्वस्वनाममन्त्रैश्चतुर्थ्यन्तपदैः पूजयेत् ।

ततः कलशसमीपे पीठिकोपरि तण्डुलोपरि वा वस्त्रमास्तीर्य स्थाल्याम् अष्टदलपद्मं लिखित्वा तदुपरि संस्थाप्य अष्टदले पूगीफलं तण्डुलपुञ्जं वा निधाय पूर्वादिक्रमेण पूजयेत् ।

**अष्टचिरञ्जीवीदेवानां पूजनम्**

पूर्वे- मार्कण्डेयम् आवाहयामि स्थापयामि पूजयामि भो मार्कण्डेय इहागच्छ इहतिष्ठ मम पूजां गृहाण इत्यावाह्य । आसनं पाद्यम् अर्घ्यम् आचमनीयं स्नानीयं पञ्चामृतं पुनराचमनीयं चन्दनम् अक्षतान् पुष्पाणि समर्पयामि मार्कण्डेयाय नमः ।

एवम् आग्नेयदले व्यासम् । दक्षिणे परशुरामम् । नैऋत्ये द्रौणिम् । पश्चिमे कृपाचार्यम् । वायव्ये बलिम् । उत्तरे हनूमन्तम् । ईशाने विभीषणम् । मध्ये षष्ठीकां च स्थापयित्वा पूजयेत् । तत्समीपे जन्मसंवत्सरं जन्ममासं स्वनक्षत्रं स्वतिथिं राशिं वारं योगकरणादिंश्च स्वस्वनामभिः चतुर्थ्यन्तपदैरर्चयेत् । ततो वस्त्रं यज्ञोपवीतं धूपः दीपः नैवेद्यं नारिकेलादिफलं ताम्बूलं कृतायाः पूजायाः साद्गुण्यार्थे द्रव्यं दक्षिणां च समर्पयेत् ।

**षष्ठीकायै दधिभक्तदानम्**

ततः षष्ठीकायै दधिभक्तबलिं दद्यात् । तद्यथा

ममायुरारोग्यवृद्धये षष्ठीकायै मात्रे एष दधिभक्तबलिस्तुभ्यं नमः ।

**पोटलिकानिर्माणम्**

ततः पीतवस्त्रे गुग्गुलं निम्बं सिद्धार्थं दूर्वागोरोचनादिकञ्च संस्थाप्य तत्र गणेशं भास्करं च पूजयेत् । ततो मार्कण्डेयाय गुडतिलमिश्रं दुग्धं समर्प्य क्रमेणाष्टचिरजीविनं प्रार्थयेत् ।

**अष्टचिरजीवीनांप्रार्थना**

मार्कण्डेयस्य

**ॐ शरदिन्दुनिभं शान्तं द्विभुजं तं वरप्रदम् ।**

**छत्राभयकरं ध्याये मार्कण्डेयं महामुनिम् ॥**

**वटवृक्षसमारूढं सच्छत्रं ब्रह्मचिन्तकम् ।**

**ऋषिवृन्दशतैस्तुत्यं मार्कण्डेयं नमाम्यहम् ॥**

व्यासस्य

**ॐ सर्वशास्त्रार्थतत्त्वज्ञं वेदवेदाङ्गपारगम् ।**

**शास्त्रमूलप्रवक्तारं पराशरसुतं भजे ॥**

परशुरामस्य

**ॐ कार्तवीर्यस्य हन्तारं परशुहस्तं महाबलम् ।**

**एकविंशतिनिःक्षत्रं कुर्वन्तं त्वां नमाम्यहम् ॥**

अश्वत्थाम्नः

**ॐ श्यामवर्णं महातेजः खड्गपाणिं वरप्रदम् ।**

**अश्वत्थामानमाचार्यं ध्याये द्रोणसुतं शिवम् ॥**

**ब्राह्मणाय नमस्तुभ्यं द्रोणाचार्यसुताय वै ।**

**वेदवेदाङ्गपूर्णाय अश्वत्थाम्ने नमो नमः ॥**

कृपस्य

**ॐ धनुर्बाणधरं वीरं श्वेतपीतद्युतिं परम् ।**

**भारद्वाजकुलोत्पन्नं कृपं ध्याये मलापहम् ॥**

**राजर्षभ नमस्तुभ्यं भारद्वाजकुलोद्भव ।**

**कृपाचार्य सदा तुष्ट धीरवीरपराक्रम ॥**

बलेः

**ॐ दैत्येन्द्रकुलसम्भूत दानयज्ञक्रियारत ।**

**प्रपन्नः शरणं त्वाहं दीर्घमायुः प्रयच्छ मे ॥**

**भूमिं स्वर्गं च पातालं येन दत्तं द्विजन्मने ।**

**भविता योऽमरावत्यां महेन्द्रस्तं नमाम्यहम् ॥**

हनूमतः

**ॐ वायुपुत्रं महावीरं रक्तवर्णं त्रिलोचनम् ।**

**कन्दमूलफलप्रीतं हनूमन्तं नमाम्यहम् ॥**

**अञ्जनीगर्भसम्भूतं हनूमन्तं नमाम्यहम् ।**

**कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥**

विभीषणस्य

**ॐ लङ्कावास नमस्तुभ्यं पौलस्त्यकुलसम्भव ।**

**राक्षसाधिपते देव नमस्तेऽस्तु विभीषण ॥**

षष्ठीकायाः

**ॐ जगन्मातर्जगद्धात्रि जगदानन्दकारिणि ।**

**प्रसीद मम कल्याणि नमोऽस्तु षष्ठीदेवते ॥**

**रूपं देहि यशो देहि भद्रं कल्याणि देहि मे ।**

**पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ॥**

कार्तिकेयस्य पूजनं प्रार्थना च

ततः तत्रैव कार्तिकेयं सम्पूज्य प्रार्थयेत्

**ॐ कार्तिकेय महाबाहो गौरीहृदयनन्दन ।**

**स्कन्द मां रक्ष सर्वत्र एहि देव नमोऽस्तु ते ॥**

ततो होमकरणपक्षे अग्निस्थापनविधिना होमं कुर्यात् । ततो नीराजनं कृत्वा मार्कण्डेयं प्रार्थयेत् । तत्पश्चात् हस्ते गन्धपुष्पादिकमादाय मार्कण्डेयस्य प्रार्थनां कुर्यात् ।

मार्कण्डेयप्रार्थना । तद्यथा

**ॐ मार्कण्डेयाय मुनये नमस्ते महदायुषे ।**

**चिरजीवी यथा त्वं भो भविष्यामि तथा मुने ॥**

**रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा ।**

**मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ॥**

**आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन्मुने ।**
**नराणामायुरारोग्यैश्वर्यसौख्यसुखप्रद ॥**
**सौम्यमूर्ते नमस्तुभ्यं भृगुवंशधराय च ।**
**महातपो मुनिश्रेष्ठ सप्तकल्पान्तजीवन ॥**
**मार्कण्डेय नमस्तुभ्यं दीर्घायुष्यं प्रयच्छ मे ।**
**मार्कण्डेय महाभाग प्रार्थये त्वां कृताञ्जलिः ॥**
**चिरजीवि यथा त्वं तु मुनीनां प्रवर द्विज ।**
**कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम् ॥**

मन्त्रपाठपूर्वकं पोटलिकाबन्धनम् । तत्र मन्त्रः

**ॐ मार्कण्डेय महाभाग आयुरारोग्यदायक ।**
**शुभदौ विघ्नहर्तारौ भानुर्विघ्नेश एव तु ॥**
**धारयामि भुजे दक्षे मम कल्याणहेतवे ।**
**पूरयध्वं सदास्माकं कामनाँश्च मनोरथान् ॥**

इति मन्त्रं पठित्वा पोटलिकां दक्षहस्ते धारयेत् ।

पयः पानम्

**ॐ सतिलं गुडसंमिश्रमञ्जल्यर्धमिदं पयः ।**
**मार्कण्डेयाद्वरं लब्ध्वा पिबाम्यायुर्विवृद्धये ॥**

इति पठित्वा तिलगुडमिश्रं पयः पिबेत् ।

पूर्णपात्रादिदानं विसर्जनञ्च

ततः पूर्णपात्रं ब्राह्मणेभ्यो दक्षिणां च दत्त्वा विशेषार्घ्यं दद्यात्

**ॐ यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।**
**निवेदितं च नैवेद्यं गृहाणाचानुकम्पया ।**
**मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर !**
**यत्पूजितं मया देव ! परिपूर्णं तदस्तु मे ॥**

ततो **यान्तुदेवे**ति देवान् विसृज्य **कायेन वाचे**ति कर्मेश्वरार्पणं कृत्वा कर्म समापयेत् ।

*॥ इति जन्मोत्सवपूजाविधिः ॥*

## शब्दार्थाः

प्रतिवर्षम् = प्रत्येक वर्ष

दीर्घायुष्यम् = लामो आयु

दधिभक्तम् = दही र भात

पोटलिका = गणेश र सूर्यलाई पूजा गरी विभिन्न पदार्थ राखी बनाइएको रक्षा ग्रन्थि, पोको

सर्वौषधि = विशेष औषधीहरू

## अभ्यासार्थाः प्रश्नाः

१. **जन्मोत्सवकर्म कदा क्रियते ?**

२. **अष्टचिरञ्जीविनो नामानि लिखत ।**

३. **पोटलिकायां कयोः देवयोः पूजा भवति ।**

४. **पोटलिका कुत्र धार्यते ?**

५. **गुडतिलमिश्रितपयःपानमन्त्रं लिखत ।**

६. **जन्मोत्सवकृत्यविधानेन कानि कानि फलानि प्राप्यन्ते ? लिखत ।**

७. **जन्मोत्सवपूजायाम् आवश्यकसामग्रीणां सूचीनिर्माणं कुरुत ।**

८. **मार्कण्डेयाद्यष्टचिरजीवीनां सचित्रं पूर्वादिक्रमेण स्थापनक्रमं प्रदर्शयत ।**

९. **मार्कण्डेयस्य प्रार्थनामन्त्रं लिखत ।**

१०. **विशेषार्घ्यदानमन्त्रं विलिखत ।**

११. **युक्तियुक्तवाक्यांशेन रिक्तस्थानं पूरयत**

कार्तिकेय महाबाहो, पिबाम्यायुर्विवृद्धये, शास्त्रमूलप्रवक्तारम्, एकविंशतिनिःक्षत्रम्, मार्कण्डेयं, महामुनिम्, सर्वत्र ।

(क) शरदिन्दुनिभं शान्तं द्विभुजं तं वरप्रदम् ।
छत्राभयकरं ध्याये .................. ॥

---

(मुरामांसी-वचा-कुष्ठा शैलेयं रजनीद्वयम् ।
जाती-चम्पक-मुस्ता च सर्वौषध्यः स्मृताः शुभाः ।

(ख) सर्वशास्त्रार्थतत्त्वज्ञं वेदवेदाङ्गपारगम् ।

...................... पराशरसुतं भजे ॥

(ग) कार्तवीर्यस्यहन्तारं परशुहस्तं महाबलम् ।

.................कुर्वन्तं त्वां नमाम्यहम् ॥

(घ) ...................... गौरीहृदयनन्दन ।

स्कन्द मां रक्ष ....... एहि देव नमोऽस्तु ते ॥

(ङ) सतिलं गुडसंमिश्रमञ्जल्यर्धमिदं पयः ।

मार्कण्डेयाद्वरं लब्ध्वा ................. ॥

**१२. परस्परं मेलयत**

| | |
|---|---|
| दक्षहस्ते | मार्कण्डेयपूजनम् |
| षष्ठीकायै | आरोग्यताप्राप्तिः |
| पूर्वदले | सर्वौषधिभिः स्नानम् |
| जन्मदिने | दधिभक्तसमर्पणम् |
| जन्मोत्सवकर्मणा | पोटलिकाबन्धनम् |
| | परशुरामपूजनम् |

**१३. शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

कार्तिकेयः, निम्बपत्रम्, पोटलिका, स्वनक्षत्रम्, दीर्घायुः

**प्रयोगाभ्यासः**

१. जन्मोत्सवकर्म किमर्थं क्रियते ? इति विषये आचार्यैः सह महत्त्वविश्लेषणपूर्वकं विमर्शं कुरुत ।

२. शुद्धरूपेण मन्त्राणां स्तोत्राणां वा सस्वरवाचनं कुरुत ।

३. परस्परमष्टचिरञ्जीविनः स्वरूपं कल्पयित्वा स्वकीयान् मन्त्रान् पुनरावृत्तिं कुरुत ।

४. स्वजन्मदिवसे स्वयमेव कर्ता भूत्वा जन्मोत्सवपूजां विधेया ।

चतुर्दशः पाठः

# प्रतिहारषष्ठीव्रतपूजाविधिः

## महत्त्वम्

कार्तिकशुक्लपक्षस्य षष्ठीतिथिः प्रतिहारषष्ठी (छठ) नाम्ना प्रसिद्धो वर्तते । अत्र जगत्साक्षिणः सूर्यस्य उपवासपूजनपूर्वकमर्घ्यदानेन समस्तरोगशमनं भवति। तथैव सुखशान्तिसन्ततिवृद्धिसम्पत्तिप्राप्ति-अवैधव्यताप्राप्त्यादीनि बहूनि शुभफलानि च लभन्ते । श्रद्धाभक्तिपूर्वकं सूर्योपासनया ऐहिकं पारलौकिकं च सुखं प्राप्यते। तथैवानेकविधासाध्यरोगाणां चामत्कारिकं शमनं भवति। जगतितले अग्निसोमतत्त्वयोः सन्तुलनाय सूर्यः स्वरश्मिभिः जलं शोष्य मेघेषु विपरिणमते। मेघाद् वृष्टिं कारयित्वा स्थावरजङ्गमानां प्राणरक्षायै ओषधीनां प्रादुर्भावः प्ररोहणं वृद्धिश्च अयमेव करोति। एतादृशस्य जगत्साक्षिणः सूर्यस्योपासना सर्वेषां प्राणिनां सर्वथा हितकरी भवति। तत्र सूर्योपासनाकाले उपवासादिना शरीरगताभ्यन्तरिकशुद्धिं च भवति । रात्रौ जागरणादिना कीर्तनादिना अशुभचिन्तनादिकं दूरीक्रियते । एतेन हि सत्कर्मणि मनः गच्छति । मानवमनसि समुत्पन्नानां कलुषानां वासनानां दूरीकरणाय प्रतिहारषष्ठ्यां सूर्योपासनां कुर्वन्ति । अत्र स्वच्छवातावरणयुते कार्तिकमासे समशीतोष्णसमये प्रवाहयुक्तजलाशये तडागे कूपे वा अनेकविधनैवेद्यफलपुष्पादिभिः शुद्धमनसा समुपासितः सूर्यः सर्वेषां प्राणिनां सर्वविधकल्याणं करोति । सर्वान् कामान् मनोरथान् च पूरयति । अतः शास्त्रदृष्ट्या लौकिकव्यवहारदृष्ट्या च प्रतिहारषष्ठीपर्वः सूर्योपासनाया महत्त्वपूर्णदिवसः आमन्यते ।

## पूजाविधिः

कार्तिकशुक्लषष्ठीतिथौ प्रतिहारषष्ठीव्रतकरणाय कार्तिकशुक्लप्रतिपदातो निरामिषो भूत्वा पञ्चम्यामेककालभोजी स्यात् । षष्ठ्यामुपवासं विधाय सम्पादितपक्वान्ना (ठेकुवा, भुसुवा) दिभिः आवश्यकपूजासामग्रीसहितो कर्ता सायङ्काले जलाशयं गत्वा संस्नाप्य कटिभागपर्यन्तं

---

**शिक्षकनिर्देशनम्**

१. शुद्धताविषये ज्ञानं प्रसारयन्तु । शुद्धमन्त्रोच्चारणाय प्रेरयन्तु ।

२. ब्रह्माण्डसञ्चालकसूर्यस्य विषये ज्ञानं शिक्षयन्तु ।

३. उपवासस्य महत्त्वं ज्ञापयन्तु ।

४. सूर्यस्याभावे लोकगतिः कीदृशी भवेत् तत्र समस्या बोधयन्तु ।

ले स्थित्वा अस्तङ्गतसूर्याय षोडशोपचारैः यथामिलितोपचारैर्वा पूजनपूर्वकमर्घ्यदानाय प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

पूर्वसङ्कल्पसिद्धिरस्तु .......... मम अद्येह कार्तिकमासस्य शुक्लप्रतिहारषष्ठीतिथौ इह जन्मनि जन्मान्तरे वा सकलदुःखदारिद्र्यभयकष्टापस्मारकुष्ठ्यादिमहाव्याध्यादिरोगनिवारण ार्थं पुत्रपौत्रादिलाभगोधनधान्यादिप्राप्त्यर्थं तथा सकलकामनासिद्धये अद्य षष्ठ्यां सायङ्काले सूर्यपूजनपूर्वकमर्घ्यदानं सप्तम्यां प्रातःकाले पूजनपूर्वकमर्घ्यदानमहं करिष्ये । तदङ्गत्वेन ब्राह्मणवरणपुण्याहवाचनं दीपकलशगणेशादिदेवानां पूजनञ्चाहं करिष्ये । इति सङ्कल्प्य व्रतं चरेत् ।

**पूजासामग्री**

अत्यन्त पवित्रता, नयाँ नाङ्लो, ठेकुवा भुसुवा आदि, अति चोखोनितो गरी बनाइएका विभिन्न प्रकारका पक्वान्न नैवेद्यहरू, रातो फूल, रातो फूलको माला, रातो अक्षता, रक्तचन्दन, अवीर, जटावाल नरिवल, पञ्चामृत, अर्घ्यको सामान, केरा, ऊखु, स्याउ लगायत विविध प्रकारका फलहरू, रातो कपडा आदि ।

**अथ सूर्यपूजाविधिस्तथार्घ्यदानञ्च**

अत्यन्ताशक्तश्चेत् ताम्रस्थाल्यां सूर्यप्रतिमां निर्माय प्राणप्रतिष्ठादिकं विधाय सूर्यं सम्पूज्यार्घ्यं दद्यात् । शक्तस्तु जलाशये एव गच्छेत् । प्राणान् प्रतिष्ठाप्य ध्यानं कुर्यात् ।

ध्यानम्

**ॐ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ।**

**केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥**

**ॐ तेजोरूपं सहस्रांशुं सप्ताश्वरथगं वरम् ।**

**द्विभुजं वरदं पद्मलाञ्छनं सर्वकामदम् ॥**

ॐ श्रीसूर्यनारायणाय नमः । ध्यायामि ।

आवाहनम्

**ॐ आगच्छ भगवन् सूर्य मण्डले च स्थिरो भव ।**

**यावत् पूजा समाप्यैतत्तावत्त्वं सन्निधो भव ॥**

ॐ श्रीसूर्यनारायणाय नमः । आवाहयामि ।

आसनम्

**ॐ हेमासनं महादिव्यं नानारत्नविभूषितम् ।**

**दत्तं मे गृह्यतां देव दिवाकर नमोऽस्तु ते ॥**

ॐ श्रीसूर्यनारायणाय नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ गङ्गाजलं समानीतं परमं पावनं महत् ।**

**पाद्यं गृहाण देवेश धामरूप नमोऽस्तु ते ॥**

ॐ श्रीसूर्यनारायणाय नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ भो भो सूर्य महाभूत ब्रह्माविष्णुस्वरूपिणे ।**

**अर्घ्यमञ्जलिना दत्तं गृहाण परमेश्वर ॥**

ॐ श्रीसूर्यनारायणाय नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ गङ्गादितीर्थजं तोयं जातीपुष्पैश्च वासितम् ।**

**ताम्रपात्रे स्थितं दिव्यं गृहाणाचमनीयकम् ॥**

ॐ श्रीसूर्यनारायणाय नमः । आचमनीयं समर्पयामि ।

मलापकर्षस्नानम्

**ॐ जाह्नवीजलमत्यन्तं पवित्रकरणं परम् ।**

**स्नानार्थं च मयानीतं स्नानं कुरु जगत्पते ॥**

ॐ श्रीसूर्यनारायणाय नमः । स्नानीयं समर्पयामि ।

पञ्चामृतस्नानम्

**ॐ पयोदधिघृतैश्चैव शर्करामधुसंयुतैः ।**

**कृतं मया च स्नपनं प्रीयतां परमेश्वर ॥**

ॐ श्रीसूर्यनारायणाय नमः । पञ्चामृतस्नानं समर्पयामि ।

स्नानीयम्

**ॐ गङ्गा गोदावरी चैव यमुना च सरस्वती ।**

**नर्मदा सिन्धुकावेरी ताभ्यः स्नानार्थमाहृतम् ॥**

ॐ श्रीसूर्यनारायणाय नमः । शुद्धोदकस्नानं समर्पयामि । आचमनीयं जलं समर्पयामि ।

युग्मवस्त्रम्

**ॐ रक्तपट्टयुगं देव सूक्ष्मतन्तुविनिर्मितम् ।**

**शुद्धं चैव मया दत्तं गृहाण कमलाकर ॥**

ॐ श्रीसूर्यनारायणाय नमः । वस्त्रयुग्मं समर्पयामि ।

उपवीतम्

**ॐ नमः कमलहस्ताय विश्वरूपाय ते नमः ।**

**उपवीतं मया दत्तं तद्गृहाण दिवाकर ॥**

ॐ श्रीसूर्यनारायणाय नमः । उपवीतं समर्पयामि । ततो आचमनीयं जलम् ।

गन्धः

**ॐ कुंकुमागरुकस्तूरीसुगन्धैश्चन्दनादिभिः ।**

**रक्तचन्दनसंयुक्तं गन्धं गृह्ण प्रभाकर ॥**

ॐ श्रीसूर्यनारायणाय नमः । गन्धानुलेपनं समर्पयामि ।

अक्षताः

**ॐ रक्तचन्दनसंमिश्रा अक्षताश्च सुशोभनाः ।**

**मया दत्ता गृहाण त्वं वरदो भव भास्कर ॥**

ॐ श्रीसूर्यनारायणाय नमः । अक्षतान् समर्पयामि ।

पुष्पाणि पुष्पमाला च

**ॐ जपाकदम्बकुसुमरक्तोत्पलयुतानि च ।**

**पुष्पाणि गृह्यतां देव सर्वकामप्रदो भव ॥**

ॐ श्रीसूर्यनारायणाय नमः । पुष्पाणि पुष्पमालां वा समर्पयामि ।

अङ्गपूजा

ॐ मित्राय नमः । पादौ पूजयामि ।

ॐ रवये नमः । जंघे पूजयामि ।

ॐ सूर्याय नमः । जानुनी पूजयामि ।

ॐ खगाय नमः । ऊरू पूजयामि ।

ॐ पूष्णे नमः । गुह्यस्थानं पूजयामि ।

ॐ हिरण्यगर्भाय नमः । कटिं पूजयामि ।

ॐ मरीचये नमः । नाभिं पूजयामि ।

ॐ आदित्याय नमः । जठरं पूजयामि ।

ॐ सवित्रे नमः । हृदयं पूजयामि ।

ॐ अर्काय नमः । स्तनौ पूजयामि ।

ॐ भास्कराय नमः । कण्ठं पूजयामि ।

ॐ अर्यम्णे नमः । स्कन्धौ पूजयामि ।

ॐ प्रभाकराय नमः । हस्तौ पूजयामि ।

ॐ अहस्कराय नमः । मुखं पूजयामि ।

ॐ प्रध्नाय नमः । नासिकां पूजयामि ।

ॐ जगदेकचक्षुषे नमः । नेत्रे पूजयामि ।

ॐ सवित्रे नमः । कर्णौ पूजयामि ।

ॐ त्रिगुणात्मधारिणे नमः । ललाटं पूजयामि ।

ॐ विरिञ्चिनारायणशङ्करात्मने नमः । शिरः पूजयामि ।

ॐ तिमिरनाशिने नमः । सर्वाङ्गं पूजयामि ।

धूपः

**ॐ दशाङ्गो गुग्गुलोद्भूतः कालागरुसमन्वितः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

ॐ श्रीसूर्यनारायणाय नमः । धूपम् आघ्रापयामि ।

दीपः

**ॐ कार्पासवर्तिकायुक्तं गोघृतेन समन्वितम् ।**

**दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥**

ॐ श्रीसूर्यनारायणाय नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ पायसं घृतसंयुक्तं नानापक्वान्नसंयुतम् ।**

**नैवेद्यं च मया दत्तं शान्तिं कुरु जगत्पते ॥**

ॐ श्रीसूर्यनारायणाय नमः । नैवेद्यं निवेदयामि ।

आचमनीयम्

**ॐ कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।**

**आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ॥**

ॐ श्रीसूर्यनारायणाय नमः । आचमनीयं समर्पयामि ।

करोद्वर्तनम्

**ॐ मलयाचलसम्भूतं कर्पूरेण समन्वितम् ।**

**करोद्वर्तनकं चारु गृह्यतां जगतः पते ॥**

ॐ श्रीसूर्यनारायणाय नमः । करोद्वर्तनं समर्पयामि ।

फलम्

**ॐ इदं फलं मया देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ॐ श्रीसूर्यनारायणाय नमः । नानाविधानि फलानि समर्पयामि ।

ताम्बूलम्

**ॐ एलालवङ्गकर्पूरखदिरैश्च सपूगकैः ।**

**नानावल्लीदलैर्युक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

ॐ श्रीसूर्यनारायणाय नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ दक्षिणां काञ्चनीं देव स्थापितां च तवाग्रतः ।**

**गृहाण सुमुखो भूत्वा प्रभाकर नमोऽस्तु ते ॥**

ॐ श्रीसूर्यनारायणाय नमः । दक्षिणाद्रव्यं समर्पयामि ।

नीराजनम्

**ॐ पञ्चवर्तिसमायुक्तं सर्वमङ्गलदायकम् ।**

**नीराजनं गृहाणेदं सर्वसौख्यकरो भव ॥**

ॐ श्रीसूर्यनारायणाय नमः । नीराजनं समर्पयामि ।

मन्त्रपुष्पाञ्जलिः

**ॐ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।**

**त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशङ्करात्मने ॥**

ॐ श्रीसूर्यनारायणाय नमः । मन्त्रपुष्पाञ्जलिं समर्पयामि ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**विलयं यान्ति तानीह प्रदक्षिणपदे पदे ॥**

ॐ श्रीसूर्यनारायणाय नमः । प्रदक्षिणां समर्पयामि ।

नमस्कारः

**ॐ नमः पङ्कजहस्ताय नमः पङ्कजमालिने ।**

**नमः पङ्कजनेत्राय भास्कराय नमो नमः ॥**

ॐ श्रीसूर्यनारायणाय नमः । नमस्करोमि ।

विशेषार्घ्यदानमन्त्राः

**ॐ नमोऽस्तु सूर्याय सहस्रभावने नमोऽस्तु वैश्वानरजातवेधसे ।**

**त्वमेव चार्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो नमस्ते ॥**

**ॐ नमो भगवते तुभ्यं नमस्ते जातवेधसे ।**

**दत्तमर्घ्यं मया भानो त्वं गृहाण नमोऽस्तु ते ॥**

**ॐ ज्योतिर्मयविभो ! सूर्य तेजोराशे ! जगत्पते !**

**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥**

**ॐ एहि सूर्य सहस्रांशो तेजोराशे ! जगत्पते ।**

**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥**

ॐ श्रीसूर्यनारायणाय नमः । विशेषार्घ्यं विनिवेदयामि ।

वायनदानम्

**ॐ तण्डुलैः पूरितं पात्रं हिरण्येन समन्वितम् ।**

**रक्तवस्त्रयुगं चैव ब्राह्मणाय निवेदयेत् ॥**

ॐ श्रीसूर्यनारायणाय नमः । वायनं समर्पयामि । वायनं ब्राह्मणाय दद्यात् ।

प्रार्थना

**ॐ यस्योदये स्याज्जगतः प्रबोधो यः कर्मसाक्षी भुवनस्य गोप्ता ।**

**कुष्ठादिव्याधिविनाशको यः स भास्करो मे दुरितं निहन्यात् ॥**

ॐ श्रीसूर्यनारायणाय नमः । प्रार्थनापूर्वकं नमस्करोमि प्रणमामि च ।

एवं सूर्यपूजामर्घ्यदानं च कृत्वा रात्रिं जागरणादिना व्यतीय प्रातः नित्यक्रियां विधाय उदीयमानं सूर्यं पूजनपूर्वकमर्घ्यं दत्त्वा उत्तराङ्गत्वेन सम्पूज्य वारत्रयं प्रणामं कृत्वा व्रतं समापयेत् ।

*॥ इति प्रतिहारषष्ठीपूजाविधिः ॥*

**शब्दार्थाः**

| | | |
|---|---|---|
| रोगशमनम् | = | रोगशान्ति, रोग निको हुनु |
| अवैधव्यताप्राप्तिः | = | विधवा नहुनु, सौभाग्यवती नै रहनु |
| असाध्यरोगाणाम् | = | निको नहुने खालका कुष्ठरोग, अर्बुद रोगजस्ता रोगहरूको |
| चामत्कारिकम् | = | चमत्कारपूर्ण, दैवीशक्तिद्वारा वा सूर्यादि देवताका कृपाले |
| अग्निसोमतत्त्वयोः | = | अग्नितत्त्व वा तातोपन र सोमतत्त्व वा चिसोपन, सूर्य र चन्द्रमाको समान तत्त्वको |

| | | |
|---|---|---|
| सन्तुलनाय | = | सन्तुलन मिलाउन, बराबरी पार्न |
| मेघेषु | = | बादलहरूमा |
| विपरिणमते | = | परिवर्तन हुन्छ, बदलिन्छ |
| प्ररोहणम् | = | उम्रने बढ्ने काम |
| कलुषानाम् | = | दूषित विचार वा भावनाहरूको |
| अतीव हितकरमार्गः | = | अत्यन्त हित गर्ने बाटो |
| समशीतोष्णसमये | = | गर्मी र जाडो दुवै नभएको समयमा |
| आब्रह्मस्तम्बपर्यन्तानाम् | = | ब्रह्मादेखि रुखबिरुवा खम्बातृणसम्मका |
| उदीयमानं सूर्यम् | = | उदाउँदै गरेका सूर्यलाई |
| अस्तङ्गतः | = | अस्ताउन लागेको, अस्तायमान |

## अभ्यासार्थाः प्रश्नाः

**१. प्रतिहारषष्ठीतिथिः लोके केन नाम्ना प्रसिद्धो वर्तते ?**

**२. प्रतिहारषष्ठ्यां सूर्योपासनाद्वारा किं लभ्यते ?**

**३. सूर्यः कथं हितकरः ?**

**४. प्रतिहारषष्ठी कथं महत्त्वपूर्णदिवसः ?**

**५. सूर्यायार्घ्यं कदा दीयते ?**

**६. अग्निसोमतत्त्वयोः सन्तुलनाय सूर्यः किं करोति ?**

**७. चराचराणां प्राणिनां कृते सूर्यः कथं हितकरो भवति ?**

**८. प्रतिहारषष्ठीपूजाविधिः संक्षेपेण लिखत ?**

**९. प्रतिज्ञासङ्कल्पवाक्यं रचयत ?**

**१०. प्रतिहारषष्ठीतिथौ सूर्यपूजनेन कानि कानि फलानि प्राप्यन्ते ?**

**११. शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

प्रतिहारषष्ठी, सूर्यः, हितकरमार्गः, सन्तुलनाय, उदीयमानम्

## १२. पाठाधारेण रिक्तस्थानं पूरयत

(क) ॐ ध्येयः सदा सवितृमण्डलमध्यवर्ती ........... ।
.................... हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

ख) ॐ .................... नमोऽस्तु वैश्वानरजातवेधसे ।
त्वमेव चार्घ्यं प्रतिगृह्ण .................... ॥

(ग) ॐ एहि सूर्य ! सहस्रांशो .................... ।
गृहाणार्घ्यं मया दत्तं .................... ॥

(घ) तण्डुलैः पूरितं पात्रं .................... ।
.................... ब्राह्मणाय निवेदयेत् ॥

(ङ) ॐ यस्योदये स्याज्जगतः प्रबोधो ........... ।
कुष्ठादिव्याधिविनाशको यः .................... ॥

## १३. परस्परं मेलयत

| | |
|---|---|
| सूर्याय नमः | कटिं पूजयामि । |
| हिरण्यगर्भाय नमः | हृदयं पूजयामि । |
| भास्कराय नमः | पादौ पूजयामि । |
| सवित्रे नमः | सर्वाङ्गं पूजयामि । |
| तिमिरनाशिने नमः | कण्ठं पूजयामि । |
| मित्राय नमः | जानुनी पूजयामि । |
| | कर्णौ पूजयामि |

## प्रयोगाभ्यासः

१. ह्रस्वदीर्घसहितध्यानमन्त्रार्घ्यदानमन्त्रान् कण्ठस्थं कृत्वा शिक्षकसहयोगेन परस्परं श्रावयत ।

२. युष्माकं ग्रामे प्रतिहारषष्ठीपूजा भवति चेत् भिन्नताविषये परस्परं विचारविमर्शं कुरुत ।

३. षष्ठीपूजावसरे जलाशयं गत्वा पूजास्वरूपं दृष्ट्वा तत्र प्राप्तज्ञानं कक्षायां परस्परं श्रावयत ।

पञ्चदशः पाठः

# भ्रातृपूजाविधिः

## महत्त्वम्

कार्तिककृष्णत्रयोदशीतिथिमारभ्य कार्तिकशुक्लद्वितीयातिथिपर्यन्तानां पञ्चदिनानां समूहो यमपञ्चकशब्देन ज्ञायते । एतेषु पञ्चसु दिवसेषु सायङ्काले गृहाद् बहिः यमाय दीपदानं क्रियते । अनेन कर्मणा एवास्य पर्वणो नाम यमपञ्चकम् । पञ्चदिवसेषु पृथक् पृथक् कृत्याः भवन्ति । यथा प्रथमदिने काकाय बलिदानम् । द्वितीयदिने श्वानाय बलिदानम् । तृतीये दिने गोपूजनं सायङ्काले लक्ष्मीपूजनम् । चतुर्थे बलिपूजनपूर्वकं गोवर्धनपूजनं पञ्चमे भगिनीभिर्भ्रातृपूजनञ्च ।

यमदूतानां यमुनापरिचारिकाणां काकश्वानगोबलिगोवर्धनादीनां पूजां विधाय ब्रह्माण्डस्थितान् पदार्थान् प्रति कृतज्ञताज्ञापनसंस्कृतेः विकासोऽत्र दृश्यते । दीपमालिकायाः प्रकाशमाध्यमेन अन्धकाराज्ञान-भ्रमादीनां निराकरणाय प्रकाशरूपज्ञानस्यावश्यकतां प्रति चेतनाया जागृतिः भवति । भातृपूजायाः भ्रातृभगिन्योरात्मीयत्वं प्रेमभावश्च प्रकटितो भवति । न केवलं भ्रातृभगिन्यादीनाम् अपि तु पशुपक्षीणां प्रकृतिं प्रति सद्भावना सदाचारश्च प्रदर्शितो भवति ।

## पूजासामग्री

सामान्य पूजासामग्री, दियो, कलश, गणेश, कर्मपात्र, अर्घ्यपात्र, थाली, कलश, प्रतिमा, धूप, बत्ती, कपूर, नैवेद्य, फलफूल, बिमिरो, ओखर, कटुस, पञ्चामृत, सप्तरङ्गी टीका, भाइलाई दिने-नैवेद्य, फलफूल, पानमसला, बहिनीलाई दिने-नैवेद्य, फलफूल, पानमसला, वस्त्र, दक्षिणा आदि ।

## अथ भ्रातृपूजाविधिः

कार्तिकशुक्लद्वितीयायां प्रातः स्नानादिकं समाप्य पूजासामग्रीः सम्पाद्य शुद्धासने उपविश्याचम्य दीपं प्रज्वाल्य कर्मपात्रं कृत्वा प्रतिज्ञासङ्कल्पं कुर्यात् ।

---

**शिक्षणनिर्देशनम्**

भातृपूजायां प्रयुक्तानां मन्त्राणां शुद्धोच्चारणाय प्रेरणां कुरुत । विद्यार्थिनमाचार्यं कल्पयित्वा भातृपूजाविधिसम्पादनार्थम् उत्प्रेरयत ।

ॐ अद्येत्यादि देशकालौ सङ्कीर्त्य अहं मम भ्रातुश्चायुरारोग्यैश्वर्योदयाद्यभिवृद्धयर्थं भ्रातृपूजनकर्माङ्गत्वेन दीपकलशगणेशपूजनपूर्वकं यमयमुनायमदूतसूर्यादिनवग्रहमार्कण्डेयाद्यष्टचिरञ्जीवीनां पूजनमहं करिष्ये ।

ततोऽर्घ्यस्थापनपूर्वकं नमोऽस्त्वनन्तायेति दीपं भूरसीत्यादिना कलशं गणानान्त्वेति गणेशं च यथाविधि सम्पूज्य कलशे सूर्यादिनवग्रहाणां मार्कण्डेयाद्यष्टचिरञ्जीवीनां गणपत्यादीन् च सम्पूजयेत् । ततो मुख्यदेवतायमपूजने षड्दलाष्टदलपृथिव्यात्मकं पीठं निर्माय तत्रासने ॐ मनोजूतिरिति मन्त्रेण प्राणान्प्रतिष्ठाप्य यमं संस्थाप्य पूजयेत् । यमप्रतिमाप्रसङ्गे बीजपुरे अक्षोटके च यमस्वरूपं भावयित्वा पूजयन्ति जनाः । अथवा अष्टदले यमप्रतिमां संस्थाप्य पूजयन्ति । पूजनक्रमश्च यथा

अथ ध्यानम्

**ॐ मेघश्यामं प्रसन्नास्यं नानालङ्कारसंयुतम् ।**

**महिषस्थं दण्डधरं भूतानां कर्मसाक्षिणम् ॥**

**नानारूपधरैर्दूतैः पितृभिरपि पूजितम् ।**

**श्वेरवस्त्रधरं देवं लोकनाथं भजेद्यमम् ॥**

इति ध्यात्वा भो यम इहागच्छेह तिष्ठेत्यावाहयेत् ।

आसनम्

**ॐ नानारत्नसमायुक्तं कार्तस्वरविभूषितम् ।**

**आसनं देवदेवेश प्रीत्यर्थं प्रतिगृह्यताम् ॥**

आसनं समर्पयामि यमाय नमः ।

पाद्यम्

**ॐ पाद्यं गृहाण देवेश सर्वक्षेमसमर्थ भोः ।**

**भक्त्या समर्पितं देव लोकनाथ नमोऽस्तु ते ॥**

पाद्यं समर्पयामि यमाय नमः ।

अर्घ्यम्

**ॐ एह्येहि मार्तण्डजपाशहस्त यमान्तकालोकधरामरेश ।**

**भ्रातृद्वितीया कृतदेवपूजा गृहाण चार्घ्यं भगवन्नमस्ते ॥**

**त्वं कर्मसाक्षी भूतानां शुभाशुभविचक्षकः ।**

**गृहाणार्घ्यं धर्मराज वैवस्वत नमोऽस्तु ते ॥**

अर्घ्यं समर्पयामि यमाय नमः ।

आचमनीयम्

**ॐ कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।**

**आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ॥**

आचमनीयं समर्पयामि यमाय नमः ।

पुनराचमनीयम्

**ॐ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।**

**स्नापिताऽसि मया देव ततः शान्तिं कुरुष्व मे ॥**

पुनराचमनीयं समर्पयामि यमाय नमः ।

पञ्चामृतम्

**ॐ परमानन्दबोधाब्दिनिमग्ननिजमूर्तये ।**

**साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ते ॥**

पञ्चामृतं समर्पयामि यमाय नमः ।

गन्धोदकस्नानम्

**ॐ कपूरैलासमायुक्तं सुगन्धिद्रव्यसंयुतम् ।**

**गन्धोदकेन स्नपनं स्नानार्थं प्रतिगृह्यताम् ॥**

गन्धोदकस्नानं समर्पयामि यमाय नमः ।

पुनः शुद्धोदकस्नानम्

**ॐ परमानन्दबोधाब्दिनिमग्ननिजमूर्तये ।**

**साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ते ॥**

पुनः शुद्धोदकस्नानं समर्पयामि यमाय नमः ।

वस्त्रयुग्मम्

**ॐ सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।**

**मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥**

वस्त्रयुग्मं समर्पयामि यमाय नमः ।

पुष्पम्

**ॐ सेवन्तिकाबकुलचम्पकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः ।**

**बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥**

पुष्पं समर्पयामि यमाय नमः ।

ततो यमदूतान् पाद्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्

यमदूतप्रार्थना

**ॐ नमोऽस्तु यमदूतेभ्यो बलिनां ये महाबलाः ।**

**मनोऽनिलाक्रान्तवेगाः पाशमुद्गरधारिणः ॥**

**मम सौख्यकराः सन्तु पीडयन्तु न मां क्वचित् ।**

**ममापचरितं सर्वं विस्मरन्तु दयालवः ॥**

ततो यमुनां पाद्यादिभिः सम्पूज्य प्रार्थयेत् ।

यमुनाप्रार्थना

**ॐ यमस्वसुर्नमस्तेऽस्तु सूर्यपुत्रि नमोऽस्तु ते ।**

**लोकमातर्नमस्तेऽस्तु नमस्ते विष्णुवल्लभे ॥**

**वरदा भव मे नित्यं यमुने लोकपूजिते ।**

ततो यमुनापरिचारिकां पूजयित्वा प्रार्थयेत् ।

यमुनापरिचारिकाप्रार्थना

**ॐ पूजयामि नमस्तुभ्यं यमुनापरिचारिकाम् ।**

**क्षमस्व मम कल्याणि यमुनापरिचारिके ॥**

धूपः

**ॐ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

धूपं समर्पयामि यमाय नमः ।

दीपः

**ॐ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**

**दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥**

दीपं दर्शयामि यमाय नमः ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ।**

नैवेद्यं समर्पयामि यमाय नमः ।

आचमनीयम्

**ॐ गन्धतोयसमायुक्तं कर्पूरादिसुवासितम् ।**

**आचम्यतां धर्मराज मया दत्तं हि भक्तितः ॥**

आचमनीयं समर्पयामि यमाय नमः ।

फलम्

**ॐ इदं फलं मया देव स्थापितं पुरतस्तव**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

फलं समर्पयामि यमाय नमः ।

ताम्बूलम्

**पूगीफलं सताम्बूलं नागवल्लिदलैर्युतम् ।**

**एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

ताम्बूलं समर्पयामि यमाय नमः ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

दक्षिणाद्रव्यं समर्पयामि यमाय नमः ।

नीराजनम्

**ॐ पञ्चवर्तिसमायुक्तं घृतेन ज्वलितं मया ।**

**आरार्तिकप्रदानेन सन्तुष्टो भव सर्वदा ॥**

**चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि तेन नीराजयाम्यहम् ॥**

नीराजनं समर्पयामि यमाय नमः ।

पुष्पाञ्जलिः

**ॐ धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज ।**

**पाहि मां किङ्करैः सार्धं सूर्यपुत्र नमोऽस्तु ते ॥**

**सौम्यानां सौम्यरूपाय पापीनां क्रूररूपिणे ।**

**अखर्वगर्वशमन कालकाल नमोऽस्तु ते ॥**

पुष्पाञ्जलिं समर्पयामि यमाय नमः ।

मार्कण्डेयाद्यष्टचिरजीवीनां पूजां विधाय प्रार्थयेत् ।

**ॐ मार्कण्डेयो बलिर्व्यासो हनूमाँश्च विभीषणः ।**

**कृपो द्रौणिः परशुरामो चाष्टैते चिरजीविनः ॥**

**ॐ मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।**

**चिरजीवी यथासि त्वं तथा मे भ्रातरं कुरु ॥१॥**

**ॐ अज्ञानतिमिरे मग्नं जगद्ज्ञानैकचक्षुषा ।**

**उद्धृतं येन मुनिना तस्मै व्यासाय ते नमः ॥२॥**

**ॐ सर्वोपकरणे शक्तं रामं शस्त्रभृतां वरम् ।**

**पितृचित्तानुगं विप्रं पूजयामि नमोऽस्तु ते ॥**

**ॐ ब्राह्मणाय नमस्तुभ्यं द्रोणाचार्यसुताय वै ।**

**वेदवेदाङ्गपूर्णाय अश्वत्थाम्ने नमो नमः ॥**

**ॐ सप्तर्षिप्रवरं देवं वीरं विप्रस्वरूपिणम् ।**

**कृपं नमामि सततं वरदो भव सर्वदा ॥**

**ॐ बलिराज नमस्तुभ्यं नमस्ते विष्णुवल्लभ ।**

**भविष्येन्द्र सुराराते वरदो भव सर्वदा ॥**

**ॐ राजैकभक्तमुकुटे रत्नज्योतिः स्वरूपिणे ।**

**भविष्यद् ब्रह्मणे तुभ्यं नमो हनुमते नमः ॥**

**ॐ विभीषण नमस्तुभ्यं नमस्तेऽसुरसत्तम ।**

**राजभक्त नमस्तुभ्यं पाहि मां सर्वदाऽनघ ॥**

**ॐ जटिलाः श्मश्रुला दक्षास्त्वग्धमन्यस्थिरूपिणः ।**

**मम पापहराः सन्तु सोमसूर्याग्निवर्चसः ॥**

**यथास्ति यमुना देवी यमेयं भ्रातृशालिनी ।**

**तथा मे भ्रातरः सन्तु प्रतिजन्मसु सुव्रताः ॥**

इति सम्प्रार्थ्य पुष्पाञ्जलिं दत्वा लोमशं च सम्पूज्य प्रार्थयेत् ।

**ॐ लोमशं सततं नौमि पूजयामि पुनः पुनः ।**

**हृल्लोमदर्शनात्तस्य ब्रह्मसङ्ख्यानुमीयते ॥**

**बकदाल्भ्यमुनिं नौमि शान्तं सङ्गतमानसम् ।**

**यस्योदासीन्यलेशान्तं गतिं कालत्रयं सदा ॥**

एवं देवपूजां निर्वर्त्य पादतः शिरपर्यन्तं भ्रातृन् सम्पूज्य टीकां मालां च कृत्वा प्रार्थयेत् ।

भ्रातृप्रार्थना

**ॐ मार्कण्डेय नमस्तेऽस्तु नमस्ते महदायुषे ।**

**चिरायुस्त्वं यथा लोके तथा भ्राता भवेन्मम ॥**

**आयुःप्रद महाभाग सोमवंश समुद्भव ।**

**महामते मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते ॥**

**भ्रातस्तवानुजाताहं भुङ्क्ष्व भोज्यमिदं शुभम् ।**

**प्रीतये यमराजस्य यमुनाया विशेषतः ॥**

**यत्प्राप्ता च यमुनया यमराजस्य पूजनात् ।**

**तथा ममापि सकलं भवेज्जन्मनि जन्मनि ॥**

**आयुर्लक्ष्मीर्यशोधैर्यं निर्भयत्वमरोगिता ।**

**वाक्पटुत्वमजाडचञ्च जायतां तव सर्वदा ॥**

ततः भ्रातृभिर्भगिनीः सम्पूज्य टीकाप्रदानपूर्वकमुपहारादिकं दत्त्वा प्रार्थयेत् ।

भगिनीप्रार्थना

**ॐ त्वं लक्ष्मीस्त्वमर्पणासि ब्राह्मी त्वं च सरस्वती ।**

**त्वत्पूजनात् भवेयुस्ताः पूजिता मम सर्वदा ॥**

**आयुर्लक्ष्मीर्धनं धान्यं पाश्वादिकमरोगिता ।**

**सर्वं त्वदर्चनाद्दीप्तं भवेज्जन्मनि जन्मनि ॥**

**पतिपुत्रधनैश्वर्यं सौभ्रात्रं जन्मजन्मनि ।**

**अक्षयं जायतां देवि धर्मराजप्रसादतः ॥**

कन्याभगिनीपूजने त्वयं विशेषः

**ॐ दयानिधिस्तुल्यवयः स्वरूपो गुणैकपूर्णः कुशलः शतायुः ।**

**क्षितीन्द्रनाथो निजधर्मबुद्धिश्चित्तानुगस्ते पतिरस्तु कन्ये ॥**

यमस्तुतिः

भातृभगिनीभिः यमस्तुतिः विधेया

**ॐ त्वमेव वैवस्वत विश्वमूर्तिस्त्वमेव कालः कलनान्तरात्मा ।**

**त्वमेव मृत्युः पुरुषत्वमेव प्रसीद देवेश नमो नमस्ते ॥**

**संसारसागरे मग्नं सदाचारविवर्जितम् ।**

**अज्ञानपङ्के सीदन्तं मामुद्धर दयानिधे ॥**

**मत्समो नास्ति पापिष्ठस्त्वत्समो नास्ति पापहा ।**

**इति विज्ञप्तिरेवात्र त्वदग्रे स्फुटते मुखात् ॥**

**दयैव तव लोकानां सेतुभूतो भवार्णवात् ।**

**मामुद्धर दयासिन्धो निरयार्णवतारक ।**

**यथा तवार्चनाद्देवी यमुना भ्रातृशालिनी ।**

**तथा तवार्चनाद्देव भ्रातरः सन्तु मे सदा ॥**

**अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।**

**दासोऽयमिति मां ज्ञात्वा प्रसीद परमेश्वर ॥**

इति स्तुत्वाऽर्घ्यं निवेद्य पूर्णपात्रं दक्षिणादानं च कृत्वा **यान्तु देवे**ति देवान् विसृज्य **कायेन वाचे**ति कर्मेश्वरार्पणं विधाय **यस्य स्मृत्वे**ति च प्रार्थयेत् ।

*॥ इति भ्रातृपूजाविधिः ॥*

## शब्दार्थाः

| | |
|---|---|
| वस्त्रयुग्मम् | = जोडी कपडा |
| परिचारिका | = सेविकाहरू |
| पीठम् | = वेदी (चौकी) |
| अष्टचिरञ्जीविनः | = मार्कण्डेयादि आठ ऋषिहरू |
| चिरायुः | = लामो आयु, दीर्घायु |
| निर्माय | = बनाएर |
| लोमशः | = लोमश नाम गरेका ऋषि जसको एक ब्रह्माजी बित्दा छातीको एउटा रौँ झर्दछ |
| कन्याभगिनीपूजनम् | = विवाह हुन बाँकी भगिनीको पूजा |

## अभ्यासार्थाः प्रश्नाः

**१. यमस्य ध्यानमन्त्रं लिखत ।**

**२. मार्कण्डेयाद्यष्टचिरञ्जीविनो नामानि लिखत ।**

**३. भ्रातृद्वितीयायां काः का देवताः पूज्यन्ते ? नामानि निर्दिशत ।**

**४. यमस्य यमुनायाः वा प्रार्थनामन्त्रान् लिखत ।**

**५. यमपञ्चके कस्मिन् कस्मिन् दिने केषां केषां पूजनं क्रियते ? लिखत ।**

**६. यमपञ्चकस्य महत्त्वं लिखत ।**

**७. भ्रातृपूजायै आवश्यकपूजासामग्र्यो लिखत ।**

**८. भ्रातृपूजायाः प्राक्कर्तव्यं लिखत ।**

**९. यमस्य पूजायामुच्चासनं कथं निर्मीयते ? लिखत ।**

**१०. कन्याभगिनीपूजनमन्त्रं कर्मसमर्पणमन्त्रं च विलिखत ।**

**११. अधस्तान् शब्दान् प्रयुज्य वाक्यानि रचयत**

भ्राता, यज्ञोपवीतम्, बीजपुरम्, अक्षोटकम्, शर्करा

**१२. परस्परं मेलयत**

| | |
|---|---|
| यमराजः | सेविका |
| कन्याभगिनी | चिरञ्जीवी |
| मार्कण्डेयः | अविवाहिता भगिनी |
| परिचारिका | यमुनाग्रजः |
| | यमुना |

## प्रयोगाभ्यासः

१. यमपञ्चकविषये परस्परं विमर्शं कुरुत ।

२. शुद्धरूपेण पाठस्य मन्त्राणां स्तोत्राणां वा सस्वरवाचनं कुरुत ।

३. सामूहिकरूपेण पुष्पाञ्जलिमन्त्राः यमयमुनयोः स्तुतिमन्त्राश्च पठनीयाः ।

४. विद्यार्थिनः परस्परं कर्ता (यजमानः) आचार्यः (पुरोहितः) भूत्वा भ्रातृपूजां सम्पादयत ।

षोडशः पाठः

# गौराव्रतपूजाविधिः

**महत्त्वम्**

दूर्वा तद्‌रूपा गौरी तत्प्रिया अष्टमी दूर्वाष्टमी भाद्रशुक्लाष्टमी ।

-शब्दकल्पद्रुमे दूर्वाशब्दः

तत्र कर्तव्यविषये गरुडपुराणस्य वचनञ्च तत्रैव

**ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ।**

**दूर्वां गौरीं गणेशञ्च फलाकारं शिवं यजेत् ॥**

**फलब्रीह्यादिभिः सर्वे शम्भुं नमः शिवाय च ।**

**अनग्निपक्वमश्नीयान्मुच्यते ब्रह्महत्यया ॥**

भाद्रशुक्लाष्टम्यां ज्येष्ठामूलरहितनक्षत्रयोः गौराव्रतं क्रियते । कन्यार्के गते सति अगस्त्योदये वा पूर्ववर्तिश्रीकृष्णजन्माष्टम्यां गौराव्रतं श्रीकृष्णजन्माष्टमीव्रतञ्च कर्तव्यं भवति । गौर्याः प्रियवाचित्वात् गौरा इति नाम जातम् । दूर्वा तद्‌रूपा गौरी तत्प्रिया अष्टमी इत्यनेन दूर्वा गौरा गौरीशब्देषु विषयेऽस्मिन्नभेदः । एतावता सिद्धयति यद् गौरापूजा दूर्वाष्टमीवद् भवति । अत्र पूजायां दूर्वापूजनं च प्रथमं कृत्वैव गौरायाः पूजनं कर्तव्यं भवति । दूर्वायाः पूजनेन कुलवृद्धिः अवैधव्यताप्राप्तिः अविच्छिन्नसन्ततिप्राप्तिः अप्राप्तलक्ष्मीप्राप्तिः प्राप्तलक्ष्मीचिरकालपर्यन्तसंरक्षणादिकं तथा स्त्रीकर्तृत्वात् अखण्डसौभाग्यवतीत्वप्राप्तिः पुत्रपौत्रादिवंशलता-विस्तारश्च भवति । कुमारीणां शीघ्रपतिप्राप्तिश्च भवति । एवं हि गौरां सम्पूज्य रात्रौ नृत्यगीत-सहितजागरणादिना जागरणं कृत्वा सौभाग्यवतिनारीभिः व्रतं चरेत् । अग्निसहयोगं विनैव पक्वान्नं दधिफलादिभक्षणेन हि उपवाससिद्धिश्च जायते । गौरामहादेवगणेशादीन् देवान् सम्पूजनेन सर्वमपि प्राप्तुं शक्यते । अतो गौरापूजनं स्त्रीणां कृतेऽतीव महत्त्वं भजते ।

---

**शिक्षकनिर्देशनम्**

१. दूर्वाष्टमीगौरापूजनयोर्मध्ये कः सम्बन्धः ? छात्रान् बोधयत ।

२. गौराव्रते विरुढापञ्चमीमारभ्य अष्टमीपर्यन्तकृत्यानां क्रमनिर्माणं कारयत ।

३. गौराव्रते प्रयुक्तानां मन्त्राणां शुद्धतया उच्चारणार्थमभिप्रेरयत ।

**पूजाविधिः**

भाद्रशुक्लपञ्चमीमारभ्याष्टम्यां गौरां सम्पूज्य मध्ये समागतम् अमुक्ताभरणसप्तमीव्रतञ्च क्रियते। अस्या पञ्चम्या नामात्र विरुडापञ्चमी। अष्टम्यां दूर्वा-गणेश-गौरी-शिवानां पूजनाय कदलीस्तम्भादिभिः सुसज्जितमण्डपं निर्मीयावश्यकपूजासामग्रीं सम्पाद्य सौभाग्यवत्यो नार्यः कुमार्यो वा कर्मपात्रादिकं कृत्वा प्रधानसङ्कल्पं कुर्यात्। तद्यथा

मासतिथ्यादीनुल्लिख्य ... मम सकलजन्मोपार्जितपापक्षयपूर्वकमखण्ड-सौभाग्यत्वप्राप्तये तथा समस्तपरिवाराणां नैरुज्यतापूर्वकदीर्घायुष्यादिप्राप्तये अविवाहिता चेत्-झटिति सर्वगुणविद्यासुरूपदीर्घायुष्यादिगुणयुक्तपतिप्राप्तये) एवं समस्तसदभीष्टसिद्धये उमामहेश्वरप्रीतये गौरीव्रताचरणञ्चाहं करिष्ये। तदङ्गत्वेन ब्राह्मणवरणं पुण्याहवाचनं दीपकलशगणेशादिसहितमण्डपस्थदेवानां पूजनञ्चाहं करिष्ये। इति सङ्कल्प्य व्रतं चरेत्।

**पूजासामग्री**

बेलपत्र, सेतो फूल, अक्षता, श्रीखण्डचन्दन, सेतो-हरियो दुबो, सौभाग्यद्रव्यहरू वस्त्रादिसहित, पक्वान्न नैवेद्य, काँचो धागो, सेतो कपडा, शिवगौरीको प्रतिमा, धूप, दीप आदि।

**अथ गौरावृतपूजाविधिः**

प्राणप्रतिष्ठापूर्वकं प्रधानदेवताया गौर्याः प्रतिमां संस्थाप्य षोडशोपचारैः पूजनं कुर्यात्।

तत्रादौ ध्यानम्

**ॐ पीतकौशेयवसनां हेमाभां कमलासनाम्।**

**भक्तानां वरदां नित्यं पार्वतीं चिन्तयाम्यहम्॥**

ॐ श्रीगौर्य्यै नमः। ध्यायामि।

आवाहनम्

**ॐ देवि देवि समागच्छ प्रार्थयेऽहं जगन्मये।**

**इमां मया कृतां पूजां गृहाण सुरसत्तमे॥**

ॐ श्रीगौर्य्यै नमः। आवाहयामि।

आसनम्

**ॐ भवानि त्वं महादेवि सर्वसौभाग्यदायिके ।**

**अनेकरत्नसंयुक्तमासनं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ सुचारु शीतलं दिव्यं नानागन्धसमन्वितम् ।**

**पाद्यं गृहाण देवेशि महादेवि नमोऽस्तु ते ॥**

ॐ श्रीगौर्य्यै नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ श्रीपार्वति महाभागे शङ्करप्रियवादिनि ।**

**अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते ॥**

ॐ श्रीगौर्य्यै नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् ।**

**आचम्यतां महाभागे रुद्रेण सहितेऽनघे ॥**

ॐ श्रीगौर्य्यै नमः । आचमनीयं समर्पयामि ।

स्नानम्

**ॐ गङ्गासरस्वतीरेवा-पयोष्णीनर्मदाजलैः ।**

**स्नापितासि मया देवि तथा शान्तिं कुरुष्व मे ॥**

ॐ श्रीगौर्य्यै नमः । स्नानीयं समर्पयामि ।

मधुपर्कः

**ॐ दध्याज्यमधुसंयुक्तं मधुपर्कं मयाऽनघे ।**

**दत्तं गृहाण देवेशि भवपाशविमुक्तये ॥**

ॐ श्रीगौर्य्यै नमः । मधुपर्कं समर्पयामि ।

पञ्चामृतम्

**ॐ पयो दधि घृतं चैव शर्करामधुसंयुतम् ।**

**पञ्चामृतेन स्नपनं प्रीत्यर्थं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ किरणा धूतपापा च पुण्यतोया सरस्वती ।**

**मणिकर्णीजलं शुद्धं स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । शुद्धोदकस्नानं समर्पयामि ।

वस्त्रम्

**ॐ सर्वभूषादिके सौम्ये लोकलज्जानिवारणे ।**

**मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । वस्त्रं समर्पयामि ।

उपवीतम्

**ॐ मन्त्रमयं मया दत्तं परब्रह्ममयं शुभम् ।**

**उपवीतमिदं सूत्रं गृहाण जगदम्बिके ॥**

ॐ श्रीगौर्य्यै नमः । उपवीतं समर्पयामि ।

कञ्चुकीम्

**ॐ कञ्चुकीमुपवीतं च नानारत्नैः समन्वितम् ।**

**गृहाण त्वं मया दत्तं पार्वत्यै च नमोऽस्तु ते ॥**

ॐ श्रीगौर्य्यै नमः । कञ्चुकीं समर्पयामि ।

गन्धम्

**ॐ कुङ्कुमागरुकर्पूरकस्तुरीचन्दनैर्युतम् ।**

**विलेपनं महादेवि तुभ्यं दास्यामि भक्तितः ॥**

ॐ श्रीगौर्य्यै नमः । गन्धं समर्पयामि ।

अक्षताः

**ॐ रञ्जिताः कुङ्कुमौघेन अक्षताश्चातिशोभनाः ।**

**भक्त्या समर्पितास्तुभ्यं प्रसन्ना भव पार्वति ॥**

ॐ श्रीगौर्य्यै नमः । अक्षतान् समर्पयामि ।

सौभाग्यद्रव्याणि

**ॐ हरिद्रां कुंकुमं चैव सिन्दूरं कज्जलान्वितम् ।**

**सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि ॥**

ॐ श्रीगौर्य्यै नमः । सौभाग्यालङ्कारान् समर्पयामि ।

पुष्पम्

**ॐ सेवन्तिकाबकुलचम्पकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः ।**

**बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वरि मे प्रसीद ॥**

ॐ श्रीगौर्य्यै नमः । पुष्पाणि समर्पयामि ।

अथाङ्गपूजा

ॐ उमायै नमः । पादौ पूजयामि ।

ॐ गौर्यै नमः । जंघे पूजयामि ।

ॐ पार्वत्यै नमः । जानुनी पूजयामि ।

ॐ जगद्धात्र्यै नमः । ऊरू पूजयामि ।

ॐ जगत्प्रतिष्ठायै नमः । कटिं पूजयामि ।

ॐ शान्तिरूपिण्यै नमः । नाभिं पूजयामि ।

ॐ देव्यै नमः । हृदयं पूजयामि ।

ॐ लोकवन्दितायै नमः । स्तनौ पूजयामि ।

ॐ काल्यै नमः । कण्ठं पूजयामि ।

ॐ शिवायै नमः । मुखं पूजयामि ।

ॐ भवान्यै नमः । नेत्रे पूजयामि ।

ॐ रुद्राण्यै नमः । कर्णौ पूजयामि ।

ॐ शर्वाण्यै नमः । ललाटं पूजयामि ।

ॐ मङ्गलदात्र्यै नमः । शिरः पूजयामि ।

धूपः

**ॐ देवद्रुमरसोद्भूतः कृष्णागरुसमन्वितः ।**

**आनीतोऽयं मया धूपो भवानि प्रतिगृह्यताम् ।**

ॐ श्रीगौर्य्यै नमः । धूपम् आघ्रपयामि ।

दीपः

**ॐ त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् ।**

**आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । प्रत्यक्षदीपं दर्शयामि ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । नैवेद्यं निवेदयामि ।

करोद्वर्तनम्

**ॐ मलयाचलसम्भूतं कर्पूरेण समन्वितम् ।**

**करोद्वर्तनकं चारु गृह्यतां जगतः पते ॥**

ॐ श्रीगौर्य्यै नमः । करोद्वर्तनं समर्पयामि ।

फलम्

**ॐ इदं फलं मया देवि स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ॐ श्रीगौर्य्यै नमः । विविधानि फलानि समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवलिदलैर्युतम् ।**

**एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

ॐ श्रीगौर्य्यै नमः । दक्षिणां समर्पयामि ।

भूषणम्

**ॐ मणिमाणिक्यवैदूर्यमुक्ताविद्रुममण्डितम् ।**

**पुष्परागसमायुक्तं भूषणं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । आभूषणानि समर्पयामि ।

नीराजनम्

**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । नीराजनं समर्पयामि ।

पुष्पाञ्जलिः

**ॐ दूर्वारूपा प्रिया गौरि ! धनधान्यप्रदायिनी ।**

**सौभाग्यं सन्ततिं देहि भक्तकार्यकरी भव ॥**

ॐ श्रीगौर्य्यै नमः । पुष्पाञ्जलिं समर्पयामि ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥**

ॐ श्रीगौर्य्यै नमः । प्रदक्षिणां समर्पयामि ।

साष्टाङ्गप्रणामम्

**ॐ अन्यथा शरणं नास्ति त्वमेव शरणं मम ।**

**तस्मात् कारुण्यभावेन क्षमस्व परमेश्वरि ॥**

ॐ श्रीगौर्य्यै नमः । साष्टाङ्गप्रणमामि ।

नमस्कारः

**ॐ पुत्रान् देहि धनं देहि सौभाग्यं देहि सुव्रते ।**

**अन्याश्च सर्वकामांश्च देहि देवि नमोऽस्तु ते ॥**

ॐ श्रीगौर्य्यै नमः । प्रार्थनापूर्वकं नमस्करोमि ।

ततो वैणवादिपात्रस्थानि सौभाग्यद्रव्यसहितानि वायनानि दद्यात् ।

वायनम्

**अन्नं सुवर्णपात्रस्थं सवस्त्रफलदक्षिणम् ।**

**वायनं गौरि विप्राय ददामि प्रीतये तव ॥**

**सौभाग्यारोग्यकामाय सर्वसम्पत्समृद्धये ।**

**गौरिगौरीश तुष्टचथं वायनं ते ददाम्यहम् ॥**

वायनानि ब्राह्मणाय दद्यात् ।

प्रातः पूजनपूर्वकमर्घ्यादिकं दत्त्वा विसर्जयेत् ।

*॥ इति गौराव्रतपूजाविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| ज्येष्ठामूलरहितनक्षत्रयोः | = | ज्येष्ठा र मूल नक्षत्र नपरेका अष्टमी तिथिमा |
| कन्यार्के | = | कन्या राशिमा सूर्य भएका बेलामा |
| अगस्त्योदये | = | अगस्ति नामको तारो उदाएपछि |
| अनग्निपक्वान्नम् | = | आगोमा नपकाएको अन्न |
| दूर्वाष्टमी | = | दुबो पूजा गर्नुपर्ने अष्टमी, भाद्रशुक्लाष्टमी |
| विरुडापञ्चमी | = | विरुडा नामको पञ्चमी तिथि |
| कुलवृद्धिः | = | आफ्ना कुलको वृद्धि, सन्तान फैलनु |
| वंशलताविस्तारः | = | आफ्ना कुलवंशका सन्तानहरू सबै क्षेत्रमा पुग्नु, वंशरूपी लहराको फैलावट हुनु |

## अभ्यासार्थाः प्रश्नाः

१. **गौराव्रतं कदा क्रियते ?**

२. **कस्यामवस्थायां श्रीकृष्णाष्टम्यामेव गौराव्रतं क्रियते ?**

३. **गौराव्रतदिने प्रथमं कस्य पूजा भवति ?**

४. **केन भक्षणेन उपवाससिद्धिर्भवति ?**

५. **अनग्निपक्वं शब्दस्य कोऽर्थः ?**

६. **गौरादेव्याः पूजनेन किं प्राप्यते ?**

७. **गौरापूजायामन्येषां केषां केषां देवानां पूजनं क्रियते ?**

८. **गौरापूजाया विधिपक्षं दर्शयत ?**

९. **अविवाहिताः कुमार्यो गौराव्रते सङ्कल्पवाक्ये किं योजयन्ति ? लिखत ।**

१०. **प्रतिज्ञासङ्कल्पवाक्यं लिखत ।**

११. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

कुलवृद्धिः, दूर्वा, भाद्रशुक्लाष्टमी, कुमार्यः, सौभाग्यवती

१२. **पाठाधारेण रिक्तस्थानं पूरयत**

(क) पीतकौशेयवसनां ..................।

भक्तानां वरदां नित्यं ................ ॥

(ख) ॐ ................ शर्करामधुसंयुतम् ।

पञ्चामृतेन स्नपनं ...................... ॥

(ग) हरिद्रां कुंकुमं चैव ....................... ।

......................... गृहाण परमेश्वरि ॥

(घ) सेवन्तिकाबकुलचम्पकपाटलाब्जैः ........... ।

.........त्वां पूजयामि जगदीश्वरि मे प्रसीद ॥

(ङ) पुत्रान् देहि धनं देहि....................... ।

अन्यांश्च सर्वकामांश्च..................... ॥

**१३. परस्परं मेलयत**

| | |
|---|---|
| ॐ उमायै नमः | जङ्घे पूजयामि । |
| ॐ गौर्यै नमः | कण्ठं पूजयामि । |
| ॐ शान्तिरूपिण्यै नमः | मुखं पूजयामि । |
| ॐ काल्यै नमः | हृदयं पूजयामि । |
| ॐ शिवायै नमः | नाभिं पूजयामि । |
| ॐ देव्यै नमः | पादौ पूजयामि । |
| | हस्तौ पूजयामि । |

## प्रयोगाभ्यासः

१. युष्माकं क्षेत्रे गौरापूजा भवति न वा ? भवति चेत् भिन्नताविषये परस्परं चर्चां कुरुत ।

२. गौरापूजावसरेऽन्येषां देवानां पूजाविषये च शिक्षकसहायेन ज्ञानं कुरुत ।

३. कक्षायां विद्यालये वा गौरापूजायाः आयोजनं कृत्वा देउडागानस्य प्रतियोगितां कुरुत ।

सप्तदशः पाठः

# वटसावित्रीव्रतपूजाविधिः

**महत्त्वम्**

ज्येष्ठकृष्णामावास्यायां वटसावित्रीव्रतं क्रियते। अत्र वटवृक्षपूजनपूर्वकं सावित्रीदेव्याः मुख्यदेवतारूपेण पूजनं भवति। अस्य व्रतस्य कर्ता विशेषेण नारी एव। स्वस्य नैरुज्यताप्राप्तये दीर्घायुष्यप्राप्तये इह जन्मनि जन्मान्तरे वा अवैधव्यताप्राप्तये पतिपुत्रयोश्च दीर्घायुरारोग्यसंपदादिप्राप्तिकामनया च वटसावित्रीव्रताचरणं क्रियते। पतिव्रतपरायणायाः सावित्र्याः पतिव्रताचरणस्य प्रभावेण मृतपतिसत्यवन्तं यमद्वारा पुनर्जीवनं दत्त्वा पतिव्रतानां नारीणां महत्त्वम् अत्र प्रदर्शितं वर्तते। तत्र यमेन वरदानावसरे सत्यवते जीवनं प्रदाय शतपुत्रान् च प्राप्तये वरदानेन पतिव्रतां सावित्रीं न केवलं सौभाग्यमेव प्रदत्तम् अपितु असम्भवरूपाणि बहूनि वरदानानि प्रदाय समाजे सद्नारीणां महत्त्वं समाजरक्षणाय भूमिका च प्रदर्शिता वर्तते। अतो वटसावित्रीव्रतस्य महत्त्वं न केवलं स्वस्य स्वपरिवारस्य कृत एव। अपितु सर्वेषां प्राणिनां कृते दृश्यते। मानवस्थितान्तर्निहितसद्विचारेण हि सत्शक्तिरग्रे दैवीशक्तिरपि पराजिता भवतीति कथामाध्यमेन प्रदर्शितो वर्तते। सन्मार्गेण सर्वमपि प्राप्तुं शक्यत इति विशेषो दृष्टान्तो वर्तते।

**पूजाविधिः**

सतीसावित्रीमुद्दिश्य अमावास्यातो दिनत्रयात्पूर्वमुपोष्य तदसम्भवे त्रयोदश्यां नक्तं चतुर्दश्यामयाचितमुपोषणं कृत्वा यज्ञीयकाष्ठेन दन्तधावनं सर्षपमृद्जलैस्तीर्थादिषु संस्नाप्य तिलामलकल्केन केशान् संशोध्य विशेषस्नानं विधाय बहूदकैः वटवृक्षसेचनकर्तव्यं भवति। वटं सूत्रेण वेष्टयित्वा शुभगन्धादिभिः सम्पूज्य प्रदक्षिणाः कर्तव्याः। वटसमीपं गत्वा पतिपुत्रयोः स्वस्य च दीर्घायुष्यादिकामनासिध्यर्थं ससङ्कल्पं वटं सम्पूज्य गृहमागत्य हरिद्राचन्दनादिभिः वटवृक्षं संलेख्य वटस्य सपरिवाराया वटसावित्र्याः यमस्य च पूजनाय पूजासामग्रीं सम्पाद्य प्रतिज्ञासङ्कल्पं कुर्यात्। तद्यथा

---

**शिक्षकनिर्देशनम्**

१. सावित्र्याः संपादितव्रतस्वरूपं शिक्षयत।

२. पूजायां प्रयुक्तान् मन्त्रान् शुद्धोच्चारणार्थमभिप्रेरयत।

३. सम्भवे सति वटवृक्षं दर्शयित्वा पूजास्थितिं प्रदर्शयत।

पूर्वसकल्पसिद्धिरस्तु ... अहं मम जन्मजन्मसु अवैधव्यताप्राप्तये पतिपुत्रयोश्चायुरारोग्यसम्पदादिप्राप्तये प्राप्तसम्पत्तेश्चिरकालपर्यन्तं स्थातुमनेकभयरोगशोकाकालापमृत्वादिदोषपरिहारपूर्वकं शास्त्रोक्तसमस्तशुभफलप्राप्त्यर्थं सावित्रीप्रीतये सावित्रीव्रतमहं करिष्ये। तदङ्गत्वेन यथोपचारैः दीपकलशगणेशादिदेवानां मण्डपस्थदेवानां च पूजनमहं करिष्ये। इति सङ्कल्प्य त्रिरात्रं व्रतं गृहीत्वा चतुर्थेऽहनि द्वादश्यां चन्द्रार्घ्यं दत्त्वा बालुकोपरि ब्राह्मणो वामाङ्गे स्थितायाः सावित्र्याः प्राणप्रतिष्ठापूर्वकं विविधोपचारैः पूजनं कर्तव्यम्। रात्रौ जागरणादिना व्यतीय प्रातः पूजनादिकं विधाय तत्पक्षीयव्रतं समापयेत्। एवं प्रतिपक्षे वटं सम्पूज्य वर्षं निनयेत्। उद्यापने षोडशसपत्नीकब्राह्मणान् सम्पूजनं भोजनं च दत्त्वा हवनादिकं च विधाय व्रतं समापयेत्।

**पूजासामग्री**

बेसार, वटवृक्ष, पूजासामग्री, काँचो धागो, सिन्दूरादि सौभाग्यद्रव्य, वटवृक्षलाई चढाउने जल, दन्तधावनका लागि अपामार्गादि यज्ञीयकाष्ठ, सर्सिउँ, चोखो माटो, स्नान गर्ने जल, तिल, अमलाको पिना, वंशपात्र, बालुवा, सप्तधान्या आदि।

**अथ वटसावित्रिव्रतपूजाविधिः**

**तत्रादौ वटवृक्षपूजा**

वटवृक्षसमीपं गत्वा आचमनकर्मपात्रनिर्माणादिकं कृत्वा पूजासामग्रीं सम्पाद्य सङ्कल्पं कुर्यात्।

पूर्वसङ्कल्पसिद्धिरस्तु ... अहं मम भर्तुः पुत्राणां चायुरारोग्यताप्राप्तये जन्मजन्मनि अवैधव्यताप्राप्तये च सावित्रीव्रतमहं करिष्ये। इति सङ्कल्पं कृत्वा वटवृक्षसेचनं कुर्यात्।

सेचनमन्त्रः

**ॐ वटमूले स्थितो ब्रह्मा वटमध्ये जनार्दनः।**

**वटाग्रे तु शिवो देवः सावित्री वटसंश्रिता॥**

**वटसिञ्चामि ते मूलं सलिलैरमृतोपमैः।**

वटं सूत्रेण वेष्टयित्वा गन्धादिभिः सम्पूज्य प्रदक्षिणां च कृत्वा गृहमागत्य पूजनं कर्तव्यम्।

**अथ वटसावित्रीविशेषपूजाविधिः**

गृहमागत्य हरिद्रादिभिः वटवृक्षं विलिख्य पूजनं कृत्वा सावित्रीपूजनं कुर्यात्। सम्पादितपूजासामग्रीः कर्ता कर्मपात्रादिकं विधाय दीपादीन् च सम्पूज्य प्रतिज्ञासङ्कल्पं

कृत्वा कलशं संस्थाप्य प्रधानकलशोपरि वंशपात्रं निधाय तदुपरि सप्तधान्यानि संस्थाप्य तत्र वस्त्रं प्रसार्य वस्त्रोपरि द्वात्रिंशद्सम्पूरकपरिमितां बालुकाप्रतिमां ब्रह्मणा सह संस्थाप्य पूजयेत् ।

प्राणान् प्रतिष्ठाप्य ध्यानं कुर्यात्

ध्यानम्

**ॐ पद्मपत्रासनस्थश्च ब्रह्मा कार्यचतुर्भुजः ।**

**सावित्री तस्य कर्तव्या वामोत्सङ्गगता तथा ॥**

**आदित्यवर्णा धर्मज्ञा साक्षमालाकरा तथा ।**

ॐ श्रीसावित्र्यै नमः । ध्यायामि ।

आवाहनम्

**ॐ ब्रह्मणा सहितां देवीं सावित्रीं लोकमातरम् ।**

**सत्यव्रतं च सावित्रीं यमं चावाहयाम्यहम् ॥**

ॐ श्रीसावित्र्यै नमः । आवाहयामि ।

आसनम्

**ॐ ब्रह्मणा सह सावित्रि सत्यवत्सहितप्रिये ।**

**हेमासनं गृह्यतां तु धर्मराज सुरेश्वर ॥**

ॐ श्रीसावित्र्यै नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ गङ्गाजलं समानीतं पाद्यार्कं ब्राह्मणः प्रिये ।**

**भक्त्या दत्तं धर्मराज सावित्रि प्रतिगृह्यताम् ॥**

ॐ श्रीसावित्र्यै नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ भक्त्या समाहृतं तोयं फलपुष्पसमन्वितम् ।**

**अर्घ्यं गृहाण सावित्रि मम सत्यव्रतप्रिये ॥**

ॐ श्रीसावित्र्यै नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ सुगन्धिसह कर्पूरं सुरभिस्वादुशीतलम्** ।

**ब्रह्मणा सह सावित्रि कुरुष्वाचमनीयकम्** ॥

ॐ श्रीसावित्र्यै नमः । आचमनीयं समर्पयामि ।

पञ्चामृतम्

**ॐ पयो दधि घृतं चैव शर्करामधुसंयुतम्** ।

**पञ्चामृतं मया दत्तं स्नानार्थं देवि गृह्यताम्** ॥

ॐ श्रीसावित्र्यै नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकम्

**ॐ मन्दाकिन्याः समानीतमुदकं ब्रह्मणः प्रिये** ।

**सावित्रिधर्मराजेन स्नानार्थं प्रतिगृह्यताम्** ॥

ॐ श्रीसावित्र्यै नमः । शुद्धोदकं समर्पयामि ।

वस्त्रम्

**ॐ सूक्ष्मतन्तुमयं वस्त्रयुग्मं कार्पाससम्भवम्** ।

**सावित्रिसत्यवत् कान्ते भक्त्या दत्तं प्रगृह्यताम्** ॥

ॐ श्रीसावित्र्यै नमः । वस्त्रं समर्पयामि ।

उपवीतम्

**सावित्रि सत्यवत्कान्ते धर्मराज सुरेश्वर** ।

**सावित्रि ब्रह्मणा सार्धमुपवीतं प्रगृह्यताम्** ॥

ॐ श्रीसावित्र्यै नमः । उपवीतं समर्पयामि ।

भूषणानि

**ॐ भूषणानि च दिव्यानि मुक्ताहारयुतानि च** ।

**त्वदर्थमुपक्लृप्तानि गृहाण शुभलोचने** ॥

ॐ श्रीसावित्र्यै नमः । आभूषणानि समर्पयामि ।

चन्दनम्

**ॐ कुंकुमागरुकर्पूरकस्तूरीरोचनायुतम् ।**

**चन्दनं ते मया दत्तं सावित्रि प्रतिगृह्यताम् ॥**

ॐ श्रीसावित्र्यै नमः । चन्दनं समर्पयामि ।

अक्षताः

**ॐ अक्षताश्च सुरश्रेष्ठे कुंकुमाक्ताः सुशोभनाः ।**

**मया निवेदिता भक्त्या गृहाण परमेश्वरि ॥**

ॐ श्रीसावित्र्यै नमः । अक्षतान् समर्पयामि ।

सौभाग्यद्रव्यम्

**ॐ हरिद्राकुंकुमं चैव सिन्दूरं कज्जलान्वितम् ।**

**सौभाग्यद्रव्यसंयुक्तं सावित्रि प्रतिगृह्यताम् ॥**

ॐ श्रीसावित्र्यै नमः । सौभाग्यद्रव्याणि समर्पयामि ।

पुष्पाणि

**ॐ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।**

**मयाहृतानि पुष्पाणि गृहाण परमेश्वरि ॥**

ॐ श्रीसावित्र्यै नमः । नानाविधपुष्पाणि समर्पयामि ।

अथाङ्गपूजा

ॐ सावित्र्यै नमः । पादौ पूजयामि ।

ॐ प्रसावित्र्यै नमः । जंघे पूजयामि ।

ॐ कमलपत्राक्ष्यै नमः । कटिं पूजयामि ।

ॐ भूतधारिण्यै नमः । उदरं पूजयामि ।

ॐ गायत्र्यै नमः । कण्ठं पूजयामि ।

ॐ ब्रह्मणः प्रियायै नमः । मुखं पूजयामि ।

ॐ सौभाग्यदात्र्यै नमः । शिरः पूजयामि ।

अथ ब्रह्मसत्यपूजा

ॐ धात्रे नमः । पादौ पूजयामि ।

ॐ विधात्रे नमः । जंघे पूजयामि ।

ॐ स्रष्टे नमः । ऊरू पूजयामि ।

ॐ प्रजापतये नमः । मेढ्रं पूजयामि ।

ॐ परमेष्ठिने नमः । कटिं पूजयामि ।

ॐ अग्निरूपाय नमः । नाभिं पूजयामि ।

ॐ पद्मनाभाय नमः । हृदयं पूजयामि ।

ॐ वेधसे नमः । बाहू पूजयामि ।

ॐ विधये नमः । कण्ठं पूजयामि ।

ॐ हिरण्यगर्भाय नमः । मुखं पूजयामि ।

ॐ ब्रह्मणे नमः । शिरः पूजयामि ।

ॐ विष्णवे नमः । सर्वाङ्गं पूजयामि ।

धूपः

**ॐ देवद्रुमरसोद्भूतः कालागरुसमन्वितः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

ॐ श्रीसावित्र्यै नमः । धूपम् आघ्रापयामि ।

दीपः

**ॐ चक्षुदं सर्वलोकानां तिमिरस्य निवारणम् ।**

**आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि ॥**

ॐ श्रीसावित्र्यै नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**मया निवेदितं भक्त्या नैवेद्यं प्रतिगृह्यताम् ॥**

ॐ श्रीसावित्र्यै नमः । सौभाग्यद्रव्याणि समर्पयामि ।

मध्ये पानीयम् । उत्तरापोशानम् । मुखप्रक्षालनम् च समर्पयामि ।

फलम्

**ॐ इदं फलं मया देवि स्थापितं पुरतस्तव ।**

**तेन मे सफलतावाप्तिर्भवेज्जनमानि जन्मनि ॥**

ॐ श्रीसावित्र्यै नमः । फलं समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।**

**एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

ॐ श्रीसावित्र्यै नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

ॐ श्रीसावित्र्यै नमः । दक्षिणाद्रव्यं समर्पयामि ।

आरार्तिक्यम्

**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि तेन नीराजयाम्यहम् ॥**

ॐ श्रीसावित्र्यै नमः । आरार्तिक्यं समर्पयामि ।

पुष्पाञ्जलिः

**ॐ सावित्रि च प्रसावित्रि सततं ब्रह्मणः प्रिये ।**

**पूजितासि द्विजैः सर्वैः स्त्रीभिर्मुनिगणैस्तथा ॥**

**त्रिसन्ध्यं देवि भूतानां वन्दनीया सुशोभने ।**

**मया दत्ता च पूजेयं त्वं गृहाण नमोऽस्तु ते ॥**

ॐ श्रीसावित्र्यै नमः । पुष्पाञ्जलिं समर्पयामि ।

ततोऽर्घ्यत्रयं दद्यात्

**ॐ कारपूर्विके देवि सर्वदुःखनिवारिणि ।**

**वेदमातर्नमस्तुभ्यं सौभाग्यं च प्रयच्छ मे ॥** इति प्रथमार्घ्यम् ।

**ॐ पतिव्रते महाभागे ब्रह्माणि च शुचिस्मिते ।**

**दृढव्रते दृढमते भर्तुश्च प्रियवादिनि ॥** इति द्वितीयार्घ्यम् ।

**ॐ अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते ।**

**पुत्रान् पौत्रांश्च सौख्यं च गृहाणार्घ्यं नमोऽस्तुते ॥** इति तृतीयार्घ्यम् ।

प्रार्थना

**ॐ सावित्री ब्रह्मागायत्री सर्वदा प्रियभाषिणी ।**
**तेन सत्येन मां पाहि दुःखसंसारसागरात् ॥**
**ॐ त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चन्द्रमण्डले ।**
**त्वमेव च जगन्मातस्त्वमुद्धर वरानने ॥**
**ॐ यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि ।**
**भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे ॥**
**ॐ अवियोगो यथा देवि सावित्र्या सहितस्य ते ।**
**अवियोगस्तथाऽस्माकं भूयाज्जन्मनि जन्मनि ॥**
**ॐ सुवासिन्यस्ततः पूज्य दिवसे दिवसे गते ।**
**सिन्दूरं कुङ्कुमं चैव ताम्बूलं च पवित्रकम् ॥**
**ॐ तथा दद्याच्च शूर्पाणि भक्ष्यं भोज्यादिकं सदा ।**
**माहात्म्यं चैव सावित्र्याः श्रोतव्यं मुनिसत्तम ॥**
**पुराणश्रवणं कार्यं सतीनां चरितं शुभम् ।**

वायनदानम्

ततो व्रतपूजासाङ्गतासिद्ध्यर्थं ब्राह्मणाय वायनप्रदानमहं करिष्ये ।

**ॐ फलं वस्त्रसमायुक्तं सौभाग्यद्रव्यसंयुतम् ।**

**वंशपात्रे निधायादौ ब्राह्मणाय निवेदयेत् ॥**

**उपायनमिदं तुभ्यं व्रतसम्पूर्तिहेतवे ।**

**वाहनं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥** इति वायनं ब्राह्मणाय दद्यात् ।

*॥ इति वटसावित्रीपूजनम् ॥*

## शब्दार्थाः

| | |
|---|---|
| वटवृक्षः | = वरको रुख |
| नैरुज्यताप्राप्तये | = निरोगिता प्राप्तिका लागि |
| पतिव्रतपरायणायाः | = पतिव्रता नारी, व्रतमा तल्लीन भएकी |
| अन्तर्निहितसद्विचारः | = अन्तस्करणमा रहेको राम्रो विचार |
| दृष्टान्तः | = उदाहरण |
| नक्तम् | = रात्रि, रात्रिमा एक छाक मात्र खाने व्रत |
| अयाचितम् | = नमागेको, नमागीकन पाएको अन्नादि खानेव्रत |
| बहूदकैः | = धेरै जलले |
| वामाङ्के | = देब्रे काखमा |
| वंशपात्रम् | = बाँसको भाँडो नाङ्लो आदि |
| द्वात्रिंशत्सम्पूरकपरिमिताम् | = बत्तीस डब्बा नापेको बालुवा |

## अभ्यासार्थाः प्रश्नाः

१. **वटसावित्रीव्रते प्रधानदेवता का ?**

२. **कस्य कृते वटसावित्रीव्रतं क्रियते ?**

३. **सावित्र्याः पूजनपूर्वं कस्य पूजा भवति ?**

४. **वटसावित्रीव्रतं कतिदिवसपूर्वं प्रारभ्यते ?**

५. **गृहे वटवृक्षं केन लिख्यते ?**

६. **कति ब्राह्मणाः सम्भोजनीयाः ?**

७. **वटसावित्रीव्रतमहत्त्वं लिखत ।**

८. **प्रतिज्ञासङ्कल्पवाक्यं रचयत ।**

९. **वटसावित्रीव्रते आवश्यकपूजासामग्रीः लिखत ।**

१०. **प्रधानकलशे सपरिवारायाः सावित्र्याः पूजाप्रकारं प्रदर्शयत ।**

**११. अर्घ्यदानमन्त्रान् लिखत ।**

**१२. शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

वंशपात्रम्, पतिव्रता, ब्रह्मा, वटवृक्षः, अयाचितम्

**१३. परस्परं मेलयत**

| | | |
|---|---|---|
| (क) | ॐ सावित्र्यै नमः | मुखं पूजयामि । |
| (ख) | ॐ गायत्र्यै नमः | शिरः पूजयामि । |
| (ग) | ॐ ब्राह्मणप्रियायै नमः | हृदयं पूजयामि । |
| (घ) | ॐ सौभाग्यदात्र्यै नमः | कटिं पूजयामि । |
| (ङ) | ॐ पद्मनाभाय नमः | कण्ठं पूजयामि । |
| (च) | ॐ ब्रह्मणे नमः | पादौ पूजयामि । |
| (छ) | ॐ कमलपत्राक्ष्यै नमः | शिरः पूजयामि । |
| | | हस्तौ पूजयामि । |

## प्रयोगाभ्यासः

१. वटवृक्षस्य स्वरूपं कल्पयत ।

२. अर्घ्यदानमन्त्रान् कण्ठस्थं कुरुत ।

३. ब्रह्मणोरङ्केस्थितं सावित्रीस्वरूपं रचयत ।

४. वृक्षसमीपं गत्वा वटसावित्रीपूजां परिकल्पय ।

५. पतिव्रतासावित्रीविषये कक्षायां गुरुसहयोगेन चर्चां कुरुत ।

अष्टादशः पाठः

# मधुश्रावणीपूजाविधिः

**महत्त्वम्**

श्रावणमासस्य कृष्णपक्षस्य पञ्चमीतिथित आरभ्य शुक्लपक्षस्य तृतीयातिथिं यावत् मैथिलेयाः मधुश्रावणीपूजां पर्वोल्लासपूर्वकं मानयन्ति । तिथिगणनामाध्यमेन अस्य पर्वणः दिनसङ्ख्यायाः गणना विधीयते । मिथिलाक्षेत्रे मैथिलीसमुदाये च इदं लोकपर्व सद्यविवाहिताः नार्यः विशेषेण स्वजन्मगृहमेव गत्वा मानयन्ति । अस्मिन् पर्वणि न केवलं नवविवाहिताः बध्व एव संलग्नाः भवन्ति । अपि तु अन्ये युवतयः नार्यश्च संमिल्य पूजां सम्पादयन्ति । अस्मिन् दिने नवबध्वः अखण्डसौभाग्यारोग्यैश्वर्यधनधान्यपुत्रपौत्रादिप्राप्तिकामनया ऐहिकामुष्मिक-नानाविधसुखप्राप्त्यर्थं च मातरं गौरीं महादेवं विषहर इति नाम्ना प्रसिद्धं नागदेवं च विशेषरूपेण पूजयन्ति । अमुष्मिन्नवसरे मिथिलाक्षेत्र अटलसौभाग्यप्रदातृत्वेन गौर्याः पूजनं भवति ।

श्रावणकृष्णचतुर्थ्यां व्रतिनः नवविवाहिताबध्वः अन्ये नार्यश्च स्नाननखकर्तनादिभिः पवित्रीभूय दिवा अन्यैः सखीबन्धुबान्धवैश्च सह लोकगीतं गायन्तः पुष्पाण्यवचेतुमवगच्छन्ति । असौ खलु कार्यकलापः फूललोढी इति नाम्ना प्रसिद्धो विद्यते । पूर्वदिने एवावचितैरेव प्रसूनैः गौर्याः विधेयमिति महादेवस्य चार्चनं परम्परा तत्रावाप्यते । सायंकाले हरिद्रादिभिः गौरीप्रतिमां निर्मीयते । तदनन्तरं गौरीप्रतिमां संस्थाप्य तस्या एव पुरतः पक्वान्ननैवेद्यानि निर्मीयन्ते । कार्यकलापोऽयं मैथिलेयैः स्वभाषया गौर इति नाम्ना सम्बोध्यन्ते । गणेशमहादेवसहितायाः गौर्याः पञ्चोपचारेण षोडशोपचारेण वा पूजनं विधाय प्रतिदिवसं कथाश्रवणादिकञ्च कुर्वन्ति ।

**पूजाविधिः**

श्रावणकृष्णपञ्चमीमारभ्य शुक्लतृतीयापर्यन्तं स्वामीपुत्रसहितां गौरीं सम्पूज्य तत्रैव विषहरनागस्य च पूजनं क्रियते । चतुर्थ्यां गौरीनागमहादेवानाञ्च पूजनार्थं मण्डपं निर्मीयावश्यकपूजासामग्रीं सम्पाद्य सौभाग्यवत्यो नार्यः कुमार्यो वा कर्मपात्रादिकं कृत्वा प्रधानसङ्कल्पं कुर्यात् । तद्यथा

मासतिथ्यादीनुल्लिख्य ... मम सकलजन्मोपार्जितपापक्षयपूर्वकमखण्ड सौभाग्यत्वप्राप्तये तथा समस्तपरिवाराणां नैरुज्यतापूर्वकदीर्घायुष्यादिप्राप्तये एवं समस्तसदभीष्टसिद्धये उमामहेश्वरप्रीतये गौरीव्रताचरणमहं करिष्ये । तदङ्गत्वेन ब्राह्मणवरणं पुण्याहवाचनं दीपकलशगणेशादिसहितमण्डपस्थदेवानां पूजनञ्चाहं करिष्ये । इति सङ्कल्प्य व्रतं चरेत् । प्रातः पूजनपूर्वकमर्घ्यादिकं दत्त्वा विसर्जयेत् ।

**पूजासामग्री**

बेलपत्र, पान, सेतो फूल, दुध, अक्षता, श्रीखण्डचन्दन, दुवो, सौभाग्यद्रव्यहरू वस्त्रादिसहित, पक्वान्न नैवेद्य, काँचो धागो, सेतो कपडा, शिवगौरीको प्रतिमा, धूप, दीप आदि ।

**अथ मधुश्रावणीव्रतपूजाविधिः**

हरिद्रादिचूर्णनिर्मितां गौरीप्रतिमां संस्थाप्य प्राणप्रतिष्ठादिकं कृत्वा षोडशोपचारैः पूजनं कुर्यात् ।

तत्रादौ ध्यानम्

**ॐ पीतकौशेयवसनां हेमाभां कमलासनाम् ।**

**भक्तानां वरदां नित्यं पार्वतीं चिन्तयाम्यहम् ॥**

ॐ श्रीगौर्य्यै नमः । ध्यायामि ।

आवाहनम्

**ॐ देवि देवि समागच्छ प्रार्थयेऽहं जगन्मये ।**

**इमां मया कृतां पूजां गृहाण सुरसत्तमे ॥**

ॐ श्रीगौर्य्यै नमः । आवाहयामि ।

आसनम्

**ॐ भवानि त्वं महादेवि सर्वसौभाग्यदायिके ।**

**अनेकरत्नसंयुक्तमासनं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ सुचारु शीतलं दिव्यं नानागन्धसमन्वितम् ।**

**पाद्यं गृहाण देवेशि महादेवि नमोऽस्तु ते ॥**

ॐ श्रीगौर्य्यै नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ श्रीपार्वति महाभागे शङ्करप्रियवादिनि ।**

**अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते ॥**

ॐ श्रीगौर्य्यै नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् ।**

**आचम्यतां महाभागे रुद्रेण सहितेऽनघे ॥**

ॐ श्रीगौर्य्यै नमः । आचमनीयं समर्पयामि ।

स्नानम्

**ॐ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।**

**स्नापितासि मया देवि तथा शान्तिं कुरुष्व मे ॥**

ॐ श्रीगौर्य्यै नमः । स्नानीयं समर्पयामि ।

मधुपर्कम्

**ॐ दध्याज्यमधुसंयुक्तं मधुपर्कं मयाऽनघे ।**

**दत्तं गृहाण देवेशि भवपाशविमुक्तये ॥**

ॐ श्रीगौर्य्यै नमः । मधुपर्कं समर्पयामि ।

पञ्चामृतम्

**ॐ पयो दधि घृतं चैव शर्करामधुसंयुतम् ।**

**पञ्चामृतेन स्नपनं प्रीत्यर्थं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ किरणा धूतपापा च पुण्यतोया सरस्वती ।**

**मणिकर्णीजलं शुद्धं स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । शुद्धोदकस्नानं समर्पयामि ।

वस्त्रम्

**ॐ सर्वभूषादिके सौम्ये लोकलज्जानिवारणे ।**

**मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । वस्त्रं समर्पयामि ।

उपवीतम्

**ॐ मन्त्रमयं मया दत्तं परब्रह्ममयं शुभम् ।**

**उपवीतमिदं सूत्रं गृहाण जगदम्बिके ॥**

ॐ श्रीगौर्य्यै नमः । उपवीतं समर्पयामि ।

कञ्चुकीम्

**ॐ कञ्चुकीमुपवीतं च नानारत्नैः समन्वितम् ।**

**गृहाण त्वं मया दत्तं पार्वत्यै च नमोऽस्तु ते ॥**

ॐ श्रीगौर्य्यै नमः । कञ्चुकीं समर्पयामि ।

चन्दनम्

**ॐ कुङ्कुमागरुकर्पूरकस्तुरीचन्दनैर्युतम् ।**

**विलेपनं महादेवि तुभ्यं दास्यामि भक्तितः ॥**

ॐ श्रीगौर्य्यै नमः । चन्दनं समर्पयामि ।

अक्षताः

**ॐ रञ्जिताः कुङ्कुमौघेन अक्षताश्चातिशोभनाः ।**

**भक्त्या समर्पितास्तुभ्यं प्रसन्ना भव पार्वति ॥**

ॐ श्रीगौर्य्यै नमः । अक्षतान् समर्पयामि ।

सौभाग्यद्रव्याणि

**ॐ हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलान्वितम् ।**

**सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि ॥**

ॐ श्रीगौर्य्यै नमः । सौभाग्यालङ्कारान् समर्पयामि ।

पुष्पम्

**ॐ सेवन्तिकाबकुलचम्पकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः ।**

**बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वरि मे प्रसीद ॥**

ॐ श्रीगौर्य्यै नमः । पुष्पाणि समर्पयामि ।

अथाङ्गपूजा

ॐ उमायै नमः । पादौ पूजयामि ।

ॐ गौर्यै नमः । जंघे पूजयामि ।

ॐ पार्वत्यै नमः । जानुनी पूजयामि ।

ॐ जगद्धात्र्यै नमः । ऊरू पूजयामि ।

ॐ जगत्प्रतिष्ठायै नमः । कटिं पूजयामि ।

ॐ शान्तिरूपिण्यै नमः । नाभिं पूजयामि ।

ॐ देव्यै नमः । हृदयं पूजयामि ।

ॐ लोकवन्दितायै नमः । स्तनौ पूजयामि ।

ॐ काल्यै नमः । कण्ठं पूजयामि ।

ॐ शिवायै नमः । मुखं पूजयामि ।

ॐ भवान्यै नमः । नेत्रे पूजयामि ।

ॐ रुद्राण्यै नमः । कर्णौ पूजयामि ।

ॐ शर्वाण्यै नमः । ललाटं पूजयामि ।

ॐ मङ्गलदात्र्यै नमः । शिरः पूजयामि ।

धूपः

**ॐ देवद्रुमरसोद्भूतः कृष्णागरुसमन्वितः ।**

**आनीतोऽयं मया धूपो भवानि प्रतिगृह्यताम् ।**

ॐ श्रीगौर्य्यै नमः । धूपम् आघ्रपयामि ।

दीपः

**ॐ त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् ।**

**आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । प्रत्यक्षदीपं दर्शयामि ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्** ॥

**भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम्** ॥

ॐ श्रीगौर्य्यै नमः । नैवेद्यं निवेदयामि ।

करोद्वर्तनम्

**ॐ मलयाचलसम्भूतं कर्पूरेण समन्वितम्** ।

**करोद्वर्तनकं चारु गृह्यतां जगतः पते** ॥

ॐ श्रीगौर्य्यै नमः । करोद्वर्तनं समर्पयामि ।

फलम्

**ॐ इदं फलं मया देवि स्थापितं पुरतस्तव** ।

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि** ॥

ॐ श्रीगौर्य्यै नमः । विविधानि फलानि समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्** ।

**एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम्** ॥

ॐ श्रीगौर्य्यै नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो** ।

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे** ॥

ॐ श्रीगौर्य्यै नमः । दक्षिणां समर्पयामि ।

भूषणम्

**ॐ मणिमाणिक्यवैदूर्यमुक्ताविद्रुममण्डितम्** ।

**पुष्परागसमायुक्तं भूषणं प्रतिगृह्यताम्** ॥

ॐ श्रीगौर्य्यै नमः । आभूषणानि समर्पयामि ।

नीराजनम्

**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ॥**

ॐ श्रीगौर्य्यै नमः । नीराजनं समर्पयामि ।

पुष्पाञ्जलिः

**ॐ दूर्वारूपा प्रिया गौरि ! धनधान्यप्रदायिनी ।**

**सौभाग्यं सन्ततिं देहि भक्तकार्यकरी भव ॥**

ॐ श्रीगौर्य्यै नमः । पुष्पाञ्जलिं समर्पयामि ।

प्रदक्षिणा

**ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥**

ॐ श्रीगौर्य्यै नमः । प्रदक्षिणां समर्पयामि ।

साष्टाङ्गप्रणामम्

**ॐ अन्यथा शरणं नास्ति त्वमेव शरणं मम ।**

**तस्मात् कारुण्यभावेन क्षमस्व परमेश्वरि ॥**

ॐ श्रीगौर्य्यै नमः । साष्टाङ्गं प्रणमामि ।

नमस्कारः

**ॐ पुत्रान् देहि धनं देहि सौभाग्यं देहि सुव्रते ।**

**अन्याश्च सर्वकामांश्च देहि देवि नमोऽस्तु ते ॥**

ॐ श्रीगौर्य्यै नमः । प्रार्थनापूर्वकं नमस्करोमि ।

ततो वैणवादिपात्रस्थानानि सौभाग्यद्रव्यसहितानि वायनानि दद्यात् ।

वायनम्

**ॐ अन्नं सुवर्णपात्रस्थं सवस्त्रफलदक्षिणम् ।**

**वायनं गौरि विप्राय ददामि प्रीतये तव ॥**

**सौभाग्यारोग्यकामाय सर्वसम्पत्समृद्धये ।**

**गौरिगौरीश तुष्टयर्थं वायनं ते ददाम्यहम् ॥**

वायनानि ब्राह्मणाय दद्यात् ।

*॥ इति मधुश्रावणीव्रतपूजाविधिः ॥*

## शब्दार्थाः

लोकपर्व = लोकले मान्दै आएको चाडपर्व, समाजमा मनाउँदै आइएका चाडपर्वहरू

प्रसूनैः = फुलहरूले

मैथिलेयैः = मिथिलाक्षेत्रमा निवास गर्ने मानिसहरूद्वारा

अवचेतुम् = टिप्न

स्वजन्मगृहे = आफ्नो जन्मघरमा

कार्यकलापैः = क्रियाकलापहरूद्वारा

तिथिगणनामाध्यमेन = तिथिको गणना गरेको त्यसको माध्यमले

नखकर्तनादिभिः = हात-खुट्टाका नङ्हरू काटेर

सम्बोध्यन्ते = सम्बोधन गरिन्छन्

## अभ्यासार्थाः प्रश्नाः

१. **मधुश्रावणीव्रतं कदा क्रियते ?**

२. **किमर्थं मधुश्रावणीव्रतं कुर्वन्ति ?**

३. **मधुश्रावणीव्रते कस्य कस्य पूजा भवति ?**

४. **अस्मिन् पर्वणि केषामधिकारः ?**

५. **अनग्निपक्वं शब्दस्य कोऽर्थः ?**

६. **गौर्याः पूजनेन किं प्राप्यते ?**

७. **मधुश्रावणीपूजाया विधिपक्षं दर्शयत ?**

८. **अविवाहिताः कुमार्यो मधुश्रावणीव्रते सङ्कल्पवाक्ये किं योजयन्ति ? लिखत ।**

९. **प्रतिज्ञासङ्कल्पवाक्यं लिखत ।**

१०. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

लोकगीतं, ताम्बूलपत्रे, कुमार्यः, प्रतिदिवसं, कार्यकलापः

## ११. पाठाधारेण रिक्तस्थानं पूरयत

(क) पीतकौशेयवसनां ..................।

भक्तानां वरदां नित्यं ................ ॥

(ख) ॐ ................ शर्करामधुसंयुतम् ।

पञ्चामृतेन स्नपनं ..................... ॥

(ग) हरिद्रां कुंकुमं चैव ...................... ।

........................ गृहाण परमेश्वरि ॥

(घ) सेवन्तिकाबकुलचम्पकपाटलाब्जैः ........... ।

.........त्वां पूजयामि जगदीश्वरि मे प्रसीद ॥

(ङ) पुत्रान् देहि धनं देहि....................... ।

अन्यांश्च सर्वकामांश्च..................... ॥

## १२. परस्परं मेलयत

| | |
|---|---|
| ॐ उमायै नमः | जंघे पूजयामि । |
| ॐ गौर्यै नमः | कण्ठं पूजयामि । |
| ॐ शान्तिरूपिण्यै नमः | मुखं पूजयामि । |
| ॐ काल्यै नमः | हृदयं पूजयामि । |
| ॐ शिवायै नमः | नाभिं पूजयामि । |
| ॐ देव्यै नमः | पादौ पूजयामि । |
| | शिरः पूजयामि । |

## प्रयोगाभ्यासः

१. युष्माकं क्षेत्रे मधुश्रावणीपूजा भवति न वा ? भवति चेत् भिन्नताविषये परस्परं चर्चां कुरुत ।

२. मधुश्रावणीपूजाविषये शिक्षकसहयोगेन ज्ञानं कुरुत ।

३. विद्यार्थिन एव परस्परम् आचार्ययजमानौ कल्पयित्वा मधुश्रावणीपूजाप्रयोगं शिक्षयत ।

एकोनविंशः पाठः

# जीवत्पुत्रिका (जितिया) व्रतपूजाविधिः

**महत्त्वम्**

आश्विनकृष्णाष्टम्यां प्रदोषव्यापिन्यां जीवत्पुत्रिकाव्रतं क्रियते। अत्र जीमूतवाहनः प्रमुखदेवता अस्ति । प्रदोषसमये स्त्रियः प्राङ्गणे पुष्करिणीं कारयित्वा तत्र पर्कटीवृक्षमारोप्य विधिना शालिवाहनपुत्रस्य जीमूतवाहनस्य दर्भमयं प्रतिमां निर्माय पूजयेयुः। अनेन स्त्रियः ऐहिकं सुखं सम्प्राप्य पतिपुत्रसमन्विताः भवन्ति । तथा सुखसम्पत्तिसन्ततियुताश्च भवन्ति तथाचान्ते सनातनं विष्णुलोकं च प्राप्नुवन्ति। एतावतैवास्य व्रतस्य नाम जीवत्पुत्रिका । अस्या अष्टम्या नाम एव जिताष्टमी । जिताष्टमी एव भाषिकापभ्रंशात् '"जितिया" नाम्ना प्रसिद्धम् । जिताष्टम्यां व्रतकर्तृणां स्त्रीणां पुत्रपौत्रधनधान्याटलसौभाग्यऽवैधव्यतादिसकलकामनानां सिद्धिर्भवति ।

**पूजाविधिः**

जिताष्टमीतिथौ प्रदोषसमये व्रती स्नानं विधाय कर्मपात्रं कृत्वा प्राङ्गणे ध्वजातोरणादिविविधपताकादिभिः कदलीस्तम्भादिभिश्च सुसज्जीकृतमण्डपं परिकल्प्य गोमयोपलिप्य पूजास्थाने पुष्करिणीं कारयित्वा तत्र पर्कटीवृक्षमारोप्य तदुपरि मृद्गोमयनिर्मितां चिह्लीं शाखोपरि स्थापयित्वा तथैव श्रृङ्गालीमधः कोटरे धृत्वा तन्मध्ये तत्र प्रधानदेवता-जीमूतवाहनस्थापनार्थं विधिना कलशं संस्थाप्य कलशोपरि कुशनिर्मितजीमूतवाहनप्रतिमां संस्थाप्य पूजनाय प्रतिज्ञासङ्कल्पं कुर्यात्। तद्यथा

तिथिमासादीनुल्लिख्य ... मम इह जन्मनि जन्मान्तरे चावैधव्यताप्राप्तिपूर्वकम् अप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्मीचिरकालपर्यन्तं संरक्षणार्थं सकलपुत्रपौत्रादि-चिरजीवित्वसकलसुखसौभाग्यधनधान्यादिसमृद्ध्यर्थं यथापलब्धोपचारैः

---

**शिक्षकनिर्देशनम्**

१. ध्यानमन्त्रौ कण्ठस्थं कारयितव्यौ ।
२. मण्डपसज्जीकरणायावश्यकसामग्रीविषये चर्चा कर्तव्या ।
३. अर्घ्यदानादिविशेषमन्त्राणां निर्देशनं कारयत ।
४. जीवत्पुत्रिकाव्रतमहत्त्वं बोधयत ।

श्रीजीमूतवाहनपूजनमहं करिष्ये । तदङ्गत्वेन ब्राह्मणवरणपुण्याहवाचन-दीपकलशगणेशादिसहितानां मण्डपस्थदेवानां पूजनमहं करिष्ये । इति सङ्कल्प्य व्रतं चरेत् ।

**पूजासामग्री**

कलश, थाली, जीमूतवाहनको प्रतिमा, पाखरीको वृक्ष या हाँगो, तुलसीपत्र, दुवो, पुरी, तालफल, पहेलो कपडा, काँक्रो, नरिवल-७, या चामलका पिठाका सातओटा डल्ला आदि नैवेद्य विशेष, बाँसका चोयाले बनाएको नाङ्लो (शूपो), सौभाग्यसामग्री वस्त्रादि सहित, पान सुपारी आदि ।

**अथ जीमूतवाहनपूजाविधिः**

प्राणप्रतिष्ठां कृत्वा प्रधानदेवस्य पूजां कुर्यात् ।

ध्यानम्

**ॐ जीमूतवाहनं देवं प्राणिनां प्राणदायकम् ।**

**शालिवाहनपुत्रं त्वां ध्यायामि जीवदैवतम् ॥**

**ॐ पुत्रपौत्रधनं दातर्जीवानां जीवदायक ।**

**अस्यां मूर्तौ स्थिरो भूत्वा सुप्रसन्नो भवाद्य नः ॥**

ॐ जीमूतवाहनाय नमः । ध्यायामि ।

आवाहनम्

**ॐ देवेश भक्तिसुलभ सर्वावरणसंयुत ।**

**यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव ॥**

ॐ जीमूतवाहनाय नमः । आवाहयामि ।

आसनम्

**ॐ कार्तस्वरमयं दिव्यं नानागुणसमन्वितम् ।**

**अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम् ॥**

ॐ जीमूतवाहनाय नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ यद्भक्तिलेशसम्पर्कात् परमानन्दसम्भवः ।**

**तस्मै ते चरणाब्जाय पाद्यं देवाय कल्पये ॥**

ॐ जीमूतवाहनाय नमः । पद्यं समर्पयामि ।

अर्घ्यम्

**ॐ तापत्रयहरं दिव्यं परमानन्दसम्भवः ।**

**तापत्रयविनिर्मुक्त्यै तवार्घ्यं कल्पयाम्यहम् ॥**

ॐ जीमूतवाहनाय नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।**

**आचम्यतां दयानाथ मया दत्तं हि भक्तितः ॥**

ॐ जीमूतवाहनाय नमः । आचमनीयं जलं समर्पयामि ।

स्नानीयम्

**ॐ गङ्गा च यमुना चैव नर्मदा च सरस्वती ।**

**कृष्णा च गोमती वेणी क्षिप्रा सिन्धुस्तथैव च ।**

**तापी पयोष्णी रेवा च ताभ्यः स्नानार्थमाहृतम् ।**

**तोयमेतत्सुखस्पर्शं स्नानीयं प्रतिगृह्यताम् ॥**

ॐ जीमूतवाहनाय नमः । स्नानीयं समर्पयामि ।

पञ्चामृतम्

**ॐ पयो दधि घृतं चैव मधु च शर्करान्वितम् ।**

**पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ जीमूतवाहनाय नमः । पञ्चामृतं समर्पयामि ।

शुद्धोदकम्

**ॐ नदीनां चैव सरसां मयानीतं जलं शुभम् ।**

**अनेन त्वं कुरु स्नानं मन्त्रैर्वारुणकैः शुभैः ॥**

ॐ जीमूतवाहनाय नमः । शुद्धोदकस्नानं समर्पयामि ।

वस्त्रम्

**ॐ तन्तुसन्तानसंयुक्तं कलाकौशेयकल्पितम् ।**

**पीतवस्त्रयुगं देव कृपया प्रतिगृह्यताम् ॥**

ॐ जीमूतवाहनाय नमः । पीतवस्त्रं समर्पयामि । वस्त्रान्ते आचमनीयं जलं समर्पयामि ।

यज्ञोपवीतम्

**ॐ यस्य शक्तित्रयेणेदं सम्प्रोक्तं सचराचरम् ।**

**यज्ञरूपाय तस्मै ते यज्ञसूत्रं प्रकल्प्यते ॥**

ॐ जीमूतवाहनाय नमः । यज्ञोपवीतं समर्पयामि । यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि ।

चन्दनम्

**ॐ श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।**

**विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ॥**

ॐ जीमूतवाहनाय नमः । चन्दनं समर्पयामि ।

अक्षताः

**ॐ अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभनाः ।**

**मया निवेदिता भक्त्या गृहाण परमेश्वर ॥**

ॐ जीमूतवाहनाय नमः । अक्षतान् समर्पयामि ।

पुष्पाणि

**ॐ सुगन्धीनि सुपुष्पाणि देशकालोद्भवानि च ।**

**मयानीतानि पूजार्थं प्रीत्या स्वीकुरु तानि मे ।**

ॐ जीमूतवाहनाय नमः । पुष्पाणि समर्पयामि ।

पुष्पमाला

**ॐ नानापुष्पविचित्राढ्यां पुष्पमालां सुशोभनम् ।**

**प्रयच्छामि च हे देव गृहाण पुरुषोत्तम ॥**

ॐ जीमूतवाहनाय नमः । पुष्पमालां समर्पयामि ।

तुलसीपत्राणि

**ॐ तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।**

**भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् ॥**

ॐ जीमूतवाहनाय नमः । तुलसीपत्राणि समर्पयामि ।

धूपः

**ॐ वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः ।**

**आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् ॥**

ॐ जीमूतवाहनाय नमः । धूपम् आघ्रापयामि ।

दीपः

**ॐ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**

**दीपं गृहाण हे देव त्रैलोक्यतिमिरापहम् ॥**

ॐ जीमूतवाहनाय नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।**

**मया निवेदितं देव नैवेद्यं प्रतिगृह्यताम् ॥**

नानाविधफलशष्कुलीपोलिकातालफलयुतानि वस्त्राच्छादितानि सप्तपिण्डाकारकाणि नैवेद्यानि जीमूतवाहनाय नमः । एतानि वंशपत्राणि जीमूतवाहनाय नमः । अयं विशेषविधिः ।

आचमनीयम्

**ॐ सर्वपापहरं दिव्यं गाङ्गेयं निर्मलं जलम् ।**

**आचमनीयं मया दत्तं गृहाण पुरुषोत्तम ॥**

ॐ जीमूतवाहनाय नमः । आचमनीयं जलं समर्पयामि ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।**

**कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

ॐ जीमूतवाहनाय नमः । ताम्बूलं समर्पयामि ।

भूषणार्थं द्रव्यम्

**ॐ काञ्चनं रजतोपेतं नानारत्नसमन्वितम् ।**

**भूषणार्थं मया दत्तं गृहाण लोकपूजित ॥**

ॐ जीमूतवाहनाय नमः । आभूषणं समर्पयामि ।

दक्षिणाद्रव्यम्

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

ॐ जीमूतवाहनाय नमः । द्रक्षिणाद्रव्यं समर्पयामि ।

पुष्पाञ्जलिः

**ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।**

**भक्त्या समर्पये तुभ्यं सर्वमावरणार्चनम् ॥**

ॐ जीमूतवाहनाय नमः । पुष्पाञ्जलिं समर्पयामि ।

अङ्गदेवतापूजनम्

यथा नमः चिह्लि ! इहागच्छ इह तिष्ठ । एतानि पाद्यादीनि एषोऽर्घ्यः चिह्लचै नमः । इदमनुलेपनम्○ । इदं सिन्दूराभरणम्○ । इदं पुष्पम्○ । एतानि गन्धपुष्पधूपदीपताम्बूलयथा भागनैवेद्यादीनि○ । एष पुष्पाञ्जलिः○ ।

ततः भो श्रृगालि इहागच्छ इह तिष्ठ । एतानि पाद्यादीनि । एषोऽर्घ्यः श्रृगाल्यै नमः । इदमनुलेपनम्○। इदं सिन्दूराभरणम्○। इदं पुष्पम्○। एतानि गन्धपुष्पधूपदीपताम्बूलयथाभाग-नैवेद्यादीनि○ । एष पुष्पाञ्जलिः○ ।

ततः भो पर्कटीवृक्ष इहागच्छ इह तिष्ठ । एतानि पाद्यादीनि एषोऽर्घ्यः पर्कटीवृक्षाय नमः । । इदमनुलेपनम्○ । इदं पुष्पम्○ । एतानि गन्धपुष्पधूपदीपताम्बूलयथाभागनैवेद्यादीनि○ । एष पुष्पाञ्जलिः○ ।

ततः बाहूट्टाराय नमः । इदमनुलेपनम्○ । इदं पुष्पम्○ । एतानि गन्धपुष्पधूपदीपताम्बूलयथा-भागनैवेद्यादीनि○ । एष पुष्पाञ्जलिः○ ।

ततः नमो मरुस्थल इहागच्छ इह तिष्ठ । एतानि पाद्यादीनि । एषोऽर्घ्यः मरुस्थलाय नमः । इदमनुलेपनम्○ । इदं पुष्पम्○ । एतानि गन्धपुष्पधूपदीपताम्बूलयथाभागनैवेद्यादीनि○ । एष पुष्पाञ्जलिः○ मरुस्थलाय नमः इति ।

सर्वान् सम्पूज्य प्रणम्य सति सम्भवे कथां श्रुत्वा आरतिपुष्पाञ्जल्यादिकं विधाय अर्घ्यदानं कुर्यात् ।

विशेषार्घ्यदानमन्त्रः

**ॐ वंशपत्रप्रियो देव ! शालिवाहनपुत्रक ! ।**

**गृहाणार्घ्यं मया दत्तं प्रीत्या स्वीकुरु जीवद ! ॥**

ॐ जीमूतवाहनाय नमः । विशेषार्घ्यं समर्पयामि ।

ततो दक्षिणादिकं दत्त्वा देवान् विसर्जयेत् ।

*॥ इति जीवत्पुत्रिकाव्रतपूजाविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| प्रदोषव्यापिन्याम् | = | सूर्यास्तपछिको तीन मुहूर्तसम्म रहने काल प्रदोष हो र न्यूनतम त्यतिखेरसम्म रहने तिथि, प्रदोषव्यापी तिथि |
| पुष्करिणीम् | = | तलाउ, पोखरीजस्तो सानो आकारको खाल्डोमा पानी भरेर तलाउ बनाएको |
| पर्कटीवृक्षः | = | पाखरीको रुख |
| आरोप्य | = | रोपेर, कल्पना गरेर |
| भाषिकापभ्रंशात् | = | भाषाको सानो रूप भाषिका, स्थानीय भाषा या सीमित क्षेत्रमा बोलिने भाषाका अपभ्रंशले, भाषाको अपभ्रंशबाट |
| चिह्लीम् | = | चील (बाज) लाई |
| श्रृंगालीम् | = | स्याललाई |
| अधः कोटरे | = | तलको खोपामा, तलको सानो कोठीमा, प्वालमा |

## अभ्यासार्थाः प्रश्नाः

१. **जीवत्पुत्रिकाव्रतस्य प्रधानदेवः कः ?**

२. **जीवत्पुत्रिकाव्रतं कदा कस्मिन्काले क्रियते ?**

३. **प्रधानदेवस्य प्रतिमा केन निर्मीयते ?**

४. **जितिया पर्व कथं जातम् ?**

५. **जिताष्टम्यां व्रतकर्तृणां स्त्रीणां काः सिद्धयोः भवन्ति ?**

६. **मण्डपनिर्माणक्रमे कानि कानि वस्तूनि आवश्यकानि ?**

७. **प्रतिज्ञासङ्कल्पवाक्यं रचयत ।**

८. **संक्षेपेण जीमूतवाहनपूजाविधिं लिखत ।**

९. **जीमूतवाहनस्य ध्यानमन्त्रौ लिखत ।**

१०. **जीवत्पुत्रिकाव्रतस्य महत्त्वं लिखत ।**

११. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

जीमूतवाहनः, स्त्रियः, जिताष्टमी, पुष्करिणीं, पर्कटीवृक्षः

**१२. पाठानुसारेण रिक्तस्थानं पूरयत**

(क) ॐ जीमूतवाहनं देवं .................... ।

.................... ध्यायामि जीवदैवतम् ॥

(ख) .................... जीवानां जीवदायकः ।

अस्यां मूर्तौ स्थिरो भूत्वा .................... ॥

(ग) ॐ तन्तुसन्तानसंयुक्तं .................... ।

.................... कृपया प्रतिगृह्यताम् ॥

(घ) ॐ .................... रत्नरूपां च मञ्जरीम् ।

भवमोक्षप्रदां तुभ्यं .................... ॥

(ङ) वंशपत्रप्रियो देव ! ....................

.................... मया दत्तं प्रीत्या स्वीकुरु जीवद ! ॥

**१३. परस्परं मेलयत**

| | |
|---|---|
| प्रधानदेवता | दर्भमयी |
| पर्कटी | जीमूतवाहनः |
| जिताष्टमी | आचमनीयम् |
| कर्पूरवासितजलम् | आश्विनकृष्णाष्टमी |
| जीमूतवाहनप्रतिमा | प्लक्षः |
| | कर्कटी |

**प्रयोगाभ्यासः**

१. शिक्षकसहयोगेन जिताष्टमीव्रतसम्पादनस्थलं गत्वा प्रत्यक्षावलोकनं कार्यम् ।

२. तावकानां गृहे समीपे वा जिवत्पुत्रिकाव्रतं क्रियते चेत् भिन्नतानां विषये सूचिनिर्माणं कृत्वा शिक्षकात् ज्ञानार्जनं कुरुत ।

३. अत्र प्रयुक्तमन्त्रान् कण्ठस्थीकरणार्थम् अभ्यासं कुरुत ।

४. विशेषमन्त्रान् यथा ध्यानमन्त्रौ विशेषार्घ्यदानमन्त्रं वस्त्रसमर्पणमन्त्रं च विशेषेण कण्ठस्थं कुरुत ।

विंशः पाठः

# लखरामपूजाविधिः

**महत्त्वम्**

श्रावणमासे मृदा सपादलक्षं शिवलिङ्गं निर्माय शिवालयेष्वर्पणपरम्परा मिथिलाक्षेत्रे प्राप्यते । अस्याः परम्परायाः शास्त्रेषु **पार्थिवलिङ्गपूजा** इति नाम्ना चर्चा विहितावाप्यते । मैथिलेयाः पार्थिवलिङ्गपूजापर्व **लखरामपूजा** इति नाम्ना सम्बोधयन्ति । प्राचीनकाले भगवान् श्रीरामचन्द्रः मृदा सपादलक्षं पार्थिवलिङ्गं निर्माय शिवं समाराधितवान् । एतदर्थमेतद् पर्व महत्त्वपूर्णं विद्यते । सर्वारिष्टनिरसनपूर्वकसर्वपापक्षयार्थं दीर्घायुरारोग्यधनधान्यपुत्रपौत्रादिसमस्तसम्पत्प्रवृद्ध्यर्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं शिवसायुज्यार्थं च जनाः शुद्धमृदः पार्थिवलिङ्गं निर्माय पूजनं कुर्वन्ति । पवित्रस्थानस्थितयोः शमीपिप्पलयोः मूले स्थितं मृदं गङ्गादिनद्याः मृदं वल्मीकमृदं वानीय तेन शिवलिङ्गं निर्माय पूजनेन कर्ता इह जन्मनि भोगैश्वर्यं सम्प्राप्यान्तेऽतीव दुर्लभं मोक्षपदं चावाप्नोतीति शास्त्रनिश्चयः । कलौ शिवार्चनस्य फलं कोटियज्ञसमं भवतीति शास्त्रेषु निर्णीतम् । पार्थिवशिवलिङ्गपूजनस्य स्त्रीशूद्रान्त्यजादीनां सर्वेषामेवाधिकारः । अतः नाममन्त्रेणैव शिवार्चनविधिरत्र प्रदर्शितः ।

**पूजाविधिः**

कृतनित्यक्रियः व्रती शुभासने पूर्वाभिमुखः उत्तराभिमुखो वा उपविश्याचम्य प्राणानायम्य पूजासामग्रीं शुद्धां मृदं च सम्पाद्य **ॐ अपवित्र०** इति मन्त्रेण पूजासामग्रीं आत्मानं च प्रोक्षेत् । ततः स्वस्तिवाचनपूर्वकं दीपकलशगणेशादीन् सम्पूज्यार्घ्यञ्च सम्पाद्य हस्ते कुशजलतिलयवान् गृहीत्वा प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

मासपक्षादीनुल्लिख्य अद्य ... मम सर्वारिष्टनिरसनपूर्वकसर्वपापक्षयार्थं दीर्घायुरारोग्यधनधान्यपुत्रपौत्रादिसमस्तसम्पत्प्रवृद्ध्यर्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीसाम्बसदाशिवप्रीत्यर्थं पार्थिवलिङ्गपूजनमहं करिष्ये । इति प्रतिज्ञाय षोडशोपचारेण पार्थिवलिङ्गार्चनं कुर्यात् ।

**पूजासामग्री**

शिवलिङ्ग बनाउनको लागि पवित्र स्थानको माटो (जस्तै- गङ्गादि नदीको, शमी-पिपलको फेदको, धमीराको गोलाको, या अन्य पवित्र स्थानको), शुद्धजल, बेलपत्र, दुवो, धतुरोको फल, पान, जनै, सेतोरातोपहेँलो फूल, माला, फल, वस्त्र, चन्दन, पूजा सामग्री-१ भाग ।

**अथ पार्थिवशिवलिङ्गपूजनविधिः**

शुद्धया मृदा सपादलक्षं शिवलिङ्गं निर्माय पवित्रस्थाने देवालये वा स्थापयित्वा तस्योपरि पीतवस्त्रं प्रसार्य तत्र पाद्यादिषोडशोपचारैः **ॐ नमः शिवाय** इति नाममन्त्रेणैव पूजनं कुर्यात् । तद्यथा

तत्र प्रथमं भूमिप्रार्थनां कुर्यात् । तत्र मन्त्रः

**ॐ सर्वाधारे धरे देवि त्वद्रूपां मृत्तिकामिमाम् ।**

**ग्रहीष्यामि प्रसन्ना त्वं लिङ्गार्थं भव सुप्रभे ॥**

ॐ ह्रां पृथिव्यै नमः ।

ततः मृत्तिकाग्रहणं कुर्यात्

**ॐ उद्धृतासि वराहेण कृष्णेन शतबाहुना ।**

**मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च ॥**

ॐ हराय नमः ।

ततः **ॐ महेश्वराय नमः** इति नाममन्त्रेण लिङ्गं निर्माय **ॐ शूलपाणये नमः । हे शिव इह प्रतिष्ठितो भव** । इति प्राणप्रतिष्ठां कुर्यात् ।

ततः न्यासं कुर्यात् ।

विनियोगः

ॐ अस्य श्रीशिवपञ्चाक्षरमन्त्रस्य वामदेव ऋषिरनुष्टुप्छन्दः श्रीसदाशिवो देवता आङ्गारो बीजं नमः शक्तिः शिवाय इति कीलकं मम साम्बसदाशिवप्रीत्यर्थं न्यासे पार्थिवलिङ्गपूजने जपे च विनियोगः ।

ऋष्यादिन्यासः

१. ॐ वामदेवर्षये नमः । शिरसि ।

२. ॐ अनुष्टुपछन्दसे नमः । मुखे ।

३. ॐ श्रीसदाशिवदेवतायै नमः । हृदि ।

४. ॐ बीजाय नमः । गुह्ये ।

५. ॐ शक्तये नमः । पादयोः ।

६. ॐ नं तत्पुरुषाय नमः । हृदये ।

७. ॐ मं अघोराय नमः । पादयोः ।

८. ॐ शिं सद्योजाताय नमः । गुह्ये ।

९. ॐ वां वामदेवाय नमः । मूर्ध्नि ।

१०. ॐ शिवाय कीलकाय नमः । सर्वाङ्गे ।

करन्यासः

ॐ अङ्गुष्ठाभ्यां नमः ।

ॐ नं तर्जनीभ्यां नमः ।

ॐ मं मध्यमाभ्यां नमः ।

ॐ शिं अनामिकाभ्यां नमः ।

ॐ वां कनिष्ठिकाभ्यां नमः ।

ॐ यं करतलकरपृष्ठाभ्यां नमः ।

षडङ्गन्यासः

ॐ हृदयाय नमः ।

ॐ नं शिरसे स्वाहा ।

ॐ मं शिखायै वषट् ।

ॐ शिं कवचाय हुम् ।

ॐ वां नेत्रत्रयाय वौषट् ।

ॐ यं अस्त्राय फट् ।

ध्यानम्

**ॐ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं**

**रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्** ।

**पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं**

**विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्** ॥

आवाहनम्

**ॐ पिनाकधृषे नमः** । श्री साम्बसदाशिव पार्थिवेश्वर इहागच्छ इह प्रतिष्ठ इह सन्निहितो भव । श्री भगवते साम्बसदाशिवपार्थिवेश्वराय नमः । आवाहनार्थे पुष्पं समर्पयामि ।

आसनम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । आसनार्थे अक्षतान् समर्पयामि ।

पाद्यम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । पादयोः पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । हस्तयोरर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । आचमनीयं जलं समर्पयामि ।

मधुपर्कम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । मधुपर्कं समर्पयामि ।

स्नानीयम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । स्नानीयं जलं समर्पयामि ।

पञ्चामृतस्नानम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । पञ्चामृतस्नानं समर्पयामि ।

शुद्धोदकस्नानम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । शुद्धोदकस्नानं समर्पयामि ।

आचमनीयम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । शुद्धोदकस्नानान्ते आचमनीयं जलं समर्पयामि ।

महाभिषेकस्नानम्- श्रीशिवमहिम्नस्तोत्रैः रुद्रसूक्तैर्वा महाभिषेकस्नानं कुर्यात् ।

गन्धोदकस्नानम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । गन्धोदकस्नानं समर्पयामि ।

आचमनीयम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । गन्धोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं जलं समर्पयामि ।

वस्त्रम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । वस्त्रं समर्पयामि । वस्त्रान्ते आचमनीयं जलं समर्पयामि ।

यज्ञोपवीतम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । यज्ञोपवीतं समर्पयामि । यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि ।

उपवस्त्रम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । उपवस्त्रं समर्पयामि । उपवस्त्रान्ते आचमनीयं जलं समर्पयामि ।

चन्दनम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । चन्दनं समर्पयामि ।

भस्म

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । भस्म समर्पयामि ।

अक्षताः

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । अक्षतान् समर्पयामि ।

पुष्पमाला

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । पुष्पमालां समर्पयामि ।

बिल्वपत्रम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । बिल्वपत्रं समर्पयामि ।

दूर्वा

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । दूर्वाङ्कुरान् समर्पयामि ।

नानापरिमलद्रव्यम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । नानापरिमलद्रव्याणि समर्पयामि ।

धूपः

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । धूपमाघ्रापयामि ।

दीपः

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । दीपं दर्शयामि ।

नैवेद्यम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । नैवेद्यं निवेदयामि ।

आचमनीयम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । मध्ये पानीयमाचमनीयं च जलं समर्पयामि ।

करोद्वर्तनम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । करोद्वर्तनार्थे चन्दनं समर्पयामि ।

ऋतुफलम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । ऋतुफलानि समर्पयामि ।

धत्तूरफलम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । धत्तूरफलानि समर्पयामि ।

ताम्बूलम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । दक्षिणां समर्पयामि ।

आरार्तिक्यम्

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । आरार्तिक्यं दर्शयामि ।

मन्त्रपुष्पाञ्जलिः

**ॐ नमः शिवाय** । श्रीभगवते साम्बसदाशिवाय नमः । मन्त्रपुष्पाञ्जलिं समर्पयामि ।

ततः अष्टदिक्षु शिवस्याष्टमूर्तीनां पूजनं कुर्यात् । तद्यथा

पूर्वे- ॐ शर्वाय क्षितिमूर्तये नमः ।

ईशाने- ॐ भवाय जलमूर्तये नमः ।

उत्तरे- ॐ रुद्राय अग्निमूर्तये नमः ।

वायव्ये- ॐ उग्राय वायुमूर्तये नमः ।

पश्चिमे- ॐ भीमाय आकाशमूर्तये नमः ।

नैर्ऋत्ये- ॐ पशुपतये यजमानमूर्तये नमः ।

दक्षिणे- ॐ महादेवाय सोममूर्तये नमः ।

आग्नेये- ॐ ईशानाय सूर्यमूर्तये नमः ।

ततः ॐ नमः शिवाय इति मन्त्रेण अष्टोत्तरशतं दशवारं वा जपं कुर्यात् ।

ततो जपसमर्पणम्

**ॐ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।**

**सिद्धिर्भवतु मे देव ! त्वत्प्रसादान्महेश्वर ॥**

प्रदक्षिणा

**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥**

क्षमाप्रार्थना

**ॐ आवाहनं न जानामि न जानामि विसर्जनम् ।**

**पूजां नैव हि जानामि क्षमस्व परमेश्वर ॥**

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।**

**यत् पूजितं महादेव ! परिपूर्णं तदस्तु मे ॥**

**त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।**

**त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥**

विसर्जनम्

**ॐ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ।**

**मम पूजां गृहीत्वेमां पुनरागमनाय च ॥**

**ॐ विष्णवे नमः । ॐ विष्णवे नमः । ॐ विष्णवे नमः ।** ॥ इति पठित्वा तीर्थजले वा यस्मिन् कस्मिँश्चित् पुण्यक्षेत्रे पार्थिवशिवलिङ्गविसर्जनं कुर्यात् ।

समर्पणम्

**अनेन पार्थिवलिङ्गपूजनकर्मणा श्रीयज्ञस्वरूपः शिवः प्रीयतां न मम ।**

*॥ इति पार्थिवशिवलिङ्गपूजनविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| पार्थिवशिवलिङ्गम् | = | माटोबाट बनाइएको शिवलिङ्ग |
| समाराधितवान् | = | आराधना गरे |
| कृतनित्यक्रियः | = | नित्यकर्महरू गरेर (गरेको छ नित्यकर्म जसले यस्तो) |
| वल्मीकमृदम् | = | धमिराको गोला घर)को माटो |
| प्रतिज्ञाय | = | प्रतिज्ञा गरेर, सङ्कल्प गरेर |
| सपादलक्षम् | = | सवा लाख, (१,२५,००० सङ्ख्या) |
| शिवसायुज्यार्थम् | = | भगवान् शिवसँग नै मिल्ने मुक्तिको लागि, शिवसायुज्य प्राप्तिका लागि |
| निर्णीतम् | = | निर्णय गरिएको, निश्चित गरिएको |

## अभ्यासार्थाः प्रश्नाः

१. **पार्थिवलिङ्गपूजा लोके केन नाम्ना प्रसिद्धो वर्तते ?**

२. **शिवार्चनद्वारा किं लभ्यते ?**

३. **मैथिलेयाः लखरामपूजायां किं कुर्वन्ति ?**

४. **पार्थिवलिङ्गपूजनपरम्परा कदा सम्प्रवृत्ता ?**

५. **कलौ शिवार्चनस्य किं फलमुक्तम् ?**

६. **पार्थिवलिङ्गपूजनस्य प्रतिज्ञासङ्कल्पवाक्यं विलिखत ।**

७. **संक्षेपेण पार्थिवलिङ्गपूजनविधिं प्रदर्शयत ।**

८. **शिवस्य ध्यानमन्त्रं लिखत ।**

९. **शिवस्याष्टमूर्तीनां पूजनप्रकारं दर्शयत ।**

१०. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

तीर्थजले, षोडशोपचारेण, प्राचीनकाले, प्रोक्षेत्, मोक्षपदम् ।

**११. पाठाधारेण रिक्तस्थानं पूरयत**

(क) ॐ ध्यायेन्नित्यं महेशं .................... ।
.................... परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं ।
...................................... पञ्चवक्त्रं त्रिनेत्रम् ॥

ख) .......................... जानामि विसर्जनम् ।
पूजां नैव हि जानामि ............................ ॥

(ग) मन्त्रहीनं क्रियाहीनं ......................... ।
.................................. परिपूर्णं तदस्तु मे ॥

(घ) ॐ उद्धृतासि वराहेण ....................... ।
................................... प्रजया च धनेन च ॥

(ङ) ............................ त्वद्रूपां मृत्तिकामिमाम् ।
ग्रहीष्यामि प्रसन्ना त्वं .............................. ॥

**१२. परस्परं मेलयत**

| | |
|---|---|
| वामदेवर्षये नमः | मुखे । |
| अनुष्टुप्छन्दसे नमः | शिरसि । |
| श्रीसदाशिवदेवतायै नमः | गुह्ये । |
| बीजाय नमः | हृदि । |
| शक्तये नमः | सर्वाङ्गे । |
| शिवाय कीलकाय नमः | पादयोः । |
| | हस्तयोः |

## प्रयोगाभ्यासः

१. ध्यानमन्त्रं क्षमाप्रार्थनामन्त्रान् विसर्जनमन्त्रं च कण्ठस्थं कृत्वा शिक्षकं श्रावयत ।

२. युष्माकं गृहे यदा पार्थिवशिवलिङ्गपूजनस्यायोजना भवति । तदा शिक्षकं मित्रानपि नयतु । तत्र प्रत्यक्षावलोकनं कृत्वा परस्परं चर्चां कुरुत ।

३. शिवार्चनस्य विषये कक्षायां परस्परं चर्चां कुरुत ।

एकविंशः पाठः

# सत्यनारायणव्रतपूजाविधिः

## महत्त्वम्

सत्यनारायणस्य व्रतकथा पूर्णिमायां सङ्क्रान्तौ एकादश्यां वा यस्मिन् कस्मिन्नपि पर्वदिने सकामेन निष्कामेन अङ्गत्वेन वा कर्तुं शक्यते । सायङ्काले प्रदोषसमये प्रातःकाले वा यथोपलब्धवस्तुद्वारा श्रद्धाभक्तिपूर्वकं व्रतमिदं क्रियते । दुःखशोकादिशमनार्थं धनधान्यसौभाग्यसन्ततिवृद्ध्यर्थं विजयप्राप्त्यर्थञ्च सत्यनारायणस्य व्रतं सरलोपायेन सम्पाद्यते । इष्टमित्रबन्धुबान्धवैः सह कर्ता पवित्रो भूत्वा प्रतिसंक्रान्तौ प्रतिपूर्णिमायां प्रतिदिने वा कामनासिद्धये सङ्कल्पानुसारेण व्रताचरणं करोति । सर्वेऽपि मानवाः सत्यनारायणस्य व्रतपूजाधिकारिणः सन्ति । सत्यनारायणस्य कथामाध्यमेन ज्ञायते यद् व्रतमिदम् अत्यन्तसरलरीत्या स्वल्पैरपि वित्तैः रम्भाफलगोधूमचूर्णशाल्यन्नचूर्णादीनां समर्पणेन भगवान् सत्यनारायणः प्रसन्नो भविष्यतीति । कथायां कलावती प्रसादभक्षणं विना पतिदर्शनार्थं समागतेन पतिं धनं च न प्राप्तवती । अतः सत्यदेवस्य पञ्चामृतं प्रसादं च यत्र कुत्रापि यादृशं तादृशमपि यथोपलभ्यते तद्ग्राह्यमेव । प्रसादग्रहणेन हि ऐहिकसुखभोगं पारलौकिकसत्यपुरवासकामनाश्च सत्यनारायणदेवः पूरयिष्यति । एतस्मात् सत्यनारायणस्य व्रतपूर्वकपूजनं कथाश्रवणं प्रसादभक्षणञ्च अतीव महत्त्वं भजते ।

## पूजाविधिः

पूर्वदिनादेव नियमान् सम्पाल्य व्रतदिने तीर्थादौ स्नात्वा कृतनित्यक्रियः कर्ता पूजासामग्रीं सम्पाद्य सत्यदेवस्य नामश्रवणकीर्तनादिभिर्दिनं व्यतीत्य ब्राह्मणबन्धुभिश्च संयुतो भूत्वा सुसज्जितकदलीस्तम्भादिभिर्मण्डपे समागत्य आचमनादिकं विधाय कर्मपात्रञ्च सम्पाद्य प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ देशकालौ संस्मृत्य मम पुत्रपौत्राद्यनेक विधधनधान्यादिनानासुखभोगानन्तरं सकलदुरितक्षयसर्वारिष्टशान्तिपूर्वकं यथोक्तफलप्राप्त्यर्थं

---

**शिक्षकनिर्देशनम्**

१. सत्यनारायणस्य महत्त्वज्ञानाय श्रुतकथामाध्यमेन छात्रान् बोधयत ।

२. शुद्धतया मन्त्रोच्चारणाय अभिप्रेरयत ।

३. सत्यनारायणस्य व्रतसंपादनविषये परस्परं चर्चाकरणाय प्रबोधयत ।

श्रीपरमेश्वरप्रीत्यर्थं सत्यपुरवासकामनया यथामिलितोपचारैः साङ्गसपरिवाररमासहितं श्रीसत्यनारायणपूजनं कथाश्रवणञ्चाहं करिष्ये ।

तदङ्गत्वेन दीपकलशगणेशादिदेवान् सम्पूज्य प्रधानकलशञ्च संस्थाप्य तदुपरि लिखिताष्टदलस्थालीं संस्थाप्य पीठदिक्पालद्वारपालादिदेवान् सम्पूज्य प्रधानदेवस्य श्रीसत्यनारायणस्य पूजनं वनञ्च कृत्वा व्रतं चरेत् ।

**पूजासामग्री**

सुनको प्रतिमा, तुलसी, शङ्ख, जल चढाउने शङ्ख, मालपुवा या अपुङ्गो, फल, फूल, माला, जनै, ऐना, चम्मर, पङ्खा, सौभाग्यसामग्री-१ आदि ।

**अथ सत्यनारायणपूजाविधिः**

कृतनित्यक्रियो व्रती रविसंक्रान्तिदिने पौर्णमास्यामेकदश्यां वा यस्मिन् कस्मिन् शुभदिने सायंकाले स्नानं कृत्वा शुद्धवस्त्रं परिधाय पूजास्थानमागत्य पवित्राऽऽसने उपविश्य पवित्रधारणं कृत्वा दीपं प्रज्ज्वाल्य आचम्य कर्मपात्रं कुर्यात् । तत्रादौ **"ॐ यद्देवा देवहेडनम्"** इति कण्डिकात्रयं पठित्वा देवानावाह्य **"ॐ पवित्रेस्थो वैष्णव्यौ"** इति मन्त्रेण पवित्रं क्षिपेत् । **"ॐ शन्नोदेवीः"** इति मन्त्रेण जलम् । **"ॐ गन्धद्वाराम्"** इति चन्दनम् । **"ॐ अक्षन्नमीमदन्त"** इत्यक्षतान् । **"ॐ यवोसि"** इति यवान् । **"ॐ श्रीश्चते लक्ष्मीः"** इति मन्त्रेण पुष्पं क्षिपेत् । ततः कुशत्रयसहितं कर्मपात्रोदकमादाय **"अपवित्रः पवित्रो वा..."** इति आत्मानं द्रव्याणि च सिञ्चेत् । ततः तत्कुशादिकमादाय प्रतिज्ञासंकल्पं कुर्यात् । तद्यथा

हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ देशकालौ संस्मृत्य मम पुत्रपौत्राद्यनेक विधधनधान्यादिनानासुखभोगानन्तरं सकलदुरितक्षयसर्वारिष्टशान्तिपूर्वकं यथोक्तफलप्राप्त्यर्थं श्रीपरमेश्वप्रीत्यर्थं सत्यपुरवासकामनया यथा मिलितोपचारैः दीपकलशगणेशनवग्रहेन्द्रादि दशदिक्पालदेवतापूजनपूर्वकं साङ्गसपरिवाररमासहितश्रीसत्यनारायणपूजनं कथाश्रवणञ्चाहं करिष्ये ।

इति सङ्कल्प्य ब्राह्मणवरणं कुर्यात् । अर्घ्यस्थापनं शङ्खार्घ्यस्थापनञ्च कृत्वा स्वस्य पुरतः किञ्चिद्वामे अर्घ्यपात्रं दक्षिणे शङ्खार्घ्यपात्रं च संस्थाप्य जलादिद्रव्याणि प्रक्षिप्य **"ॐ गङ्गे च यमुने चैव"** इति सम्पूज्य मुद्राप्रदर्शनादिकं च कुर्यात् । ततो दीपकलशगणेशपूजा विधाय प्रधानदेवतां पूजयेत्

**प्रधानकलशस्थापनं पूजनञ्च**

मध्ये धान्योपरि कलशं संस्थाप्य पूर्वोक्तकलशपूजाविधिना कलशं सम्पूज्य ततस्ताम्रस्थाल्यामष्टदलं विलिख्य कलशोपरि स्थापयेत् ।

पीठपूजा

पूर्वे ॐ विमले इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत्पूजां करोमि तावत्त्वं सुस्थिरा भव इत्यावाहच पाद्यादिभिरुपचारैः पूजयेत् । इत्यनेनैव क्रमेण आग्नेये ॐ ज्ञानरूपायै नमः । दक्षिणे ॐ क्रियायै नमः । नैर्ऋत्ये ॐ योगायै नमः । पश्चिमे ॐ प्रभायै नमः । वायव्ये ॐ सत्यायै नमः । उत्तरे ॐ अनुग्रहायै नमः । ईशाने ॐ ईशान्यै नमः । मध्ये ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगाय योगपद्मपीठात्मने नमः । इति आवाहनादि पाद्यादिभिरुपचारैः पीठपूजां कुर्यात् ।

पुनः पूर्वे ॐ लक्ष्म्यै नमः । दक्षिणे ॐ सरस्वत्यै नमः । पश्चिमे ॐ आदिपुरुषाय नमः । उत्तरे ॐ अनादि पुरुषाय नमः । आग्नये ॐ गणपतये नमः । नैर्ऋत्ये ॐ सूर्याय नमः । वायव्ये ॐ अम्बिकायै नमः । ईशाने ॐ शिवाय नमः । वायव्ये ॐ श्रीरामाय नमः । तत्रैव ॐ श्रीलक्ष्मणाय नमः ।

दिक्पालपूजा

पूर्वदले ॐ भो इन्द्र इहागच्छ इह तिष्ठ यावत् पूजां करोमि तावत्त्वं सुस्थिरो भव सुप्रसन्नो भव । इत्यावाहच पाद्यादिभिरुचारैः पूजयेत् । एवं क्रमेण आग्नेयदले ॐ अग्नये नमः । दक्षिणदले ॐ यमाय नमः । नैर्ऋत्यदले ॐ निर्ऋतये नमः । पश्चिमदले ॐ वरुणाय नमः । वायव्यदले ॐ वायवे नमः । उत्तरदले ॐ कुबेराय नमः । ईशानदले ॐ ईशानाय नमः । पूर्वेशानयोर्मध्ये ॐ ब्रह्मणे नमः । निर्ऋतिवरुणयोर्मध्ये ॐ अनन्ताय नमः ।। इति पाद्यादिभिरुपचारैः पूजयेत् ।

द्वारपालपूजा

पूर्वे ॐ नन्दाय नमः । आग्नेये ॐ सुनन्दाय नमः । दक्षिणे ॐ बलाय नमः । नैर्ऋत्ये ॐ प्रबलाय नमः । पश्चिमे ॐ जयाय नमः । वायव्ये ॐ विजयाय नमः । उत्तरे ॐ सुशीलाय नमः । ईशाने ॐ पुण्यशीलाय नमः । इति आवाहनापाद्यादिभिरुपचारैः सम्पूज्य धूपदीपनैवेद्यादिकं च कुर्यात् ।

**प्रधानदेवतापूजा**

ततः स्थालीमध्ये सुर्वणप्रतिमां संस्थाप्य तत्र रमासहितस्य श्रीसत्यनारायणस्य पूजां कुर्यात् तत्र क्रमः

प्राणप्रतिष्ठा

**ॐ आं ह्रीं क्रौं रमासहितस्य श्रीसत्यनारायणस्य जीवप्राणवाक्पाणिपादपायूपस्थदीनि सर्वेन्द्रियाणि इहागत्य यथासुखं चिरं तिष्ठन्तु नमः ।**

**ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमन्दधातु । विश्वेदेवासऽइह मादयन्तामोंꣳप्रतिष्ठ ॥**

इति मन्त्रेण प्राणप्रतिष्ठां कुर्यात् ।

आवाहनम्

**ॐ सहस्रशीर्षा... ।**

**ॐ भूर्भुवः स्वः रमासहित श्रीसत्यनारायण इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत्पूजां करोमि तावत्त्वं सुस्थिरो भव सुप्रसन्नो भव ॥**

ध्यानम्

**ॐ ध्यायेत्सत्यं गुणातीतं गुणत्रयसमन्वितम् ।**

**लोकनाथं त्रिलोकेशं कौस्तुभाभरणं हरिम् ॥**

**सुलोचनं चतुर्बाहुं शङ्खचक्रगदाधरम् ।**

**किरीटिनं कुण्डलिनं वनमालाविभूषितम् ॥**

**कङ्कणाङ्गुलिभूषाभिः केयूरैश्च विराजितम् ।**

**गोविन्दं गोकुलानन्दं ब्रह्माद्यैरभिपूजितम् ॥**

ध्यानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

आसनम् कुशद्वयासनम्

**ॐ पुरुषऽएव... ।**

**नानारत्नसमायुक्तं कार्तस्वरविभूषितम् ।**

**आसनं देवदेवेश गृहाण पुरुषोत्तम ॥**

आसनं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ॥

पाद्यम्

**ॐ एतावानस्य...** ।

**नानातीर्थाहृतं तोयं निर्मलं पुष्पमिश्रितम्** ।

**पाद्यं गृहाण देवेश विश्वरूप नमोऽस्तु ते** ॥

पाद्यं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

अर्घ्यम्

**ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः...** ।

**गन्धपुष्पाक्षतोपेतं दधिदूर्वासमन्वितम्** ।

**अर्घ्यं गृहाण देवेश मया दत्तं हि भक्तितः** ॥

अर्घ्यं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ॥

आचमनीयम्

**ॐ ततो विराडजायत...** ।

**कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम्** ।

**आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः** ॥

आचमनं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

मधुपर्कम्

**ॐ दधि क्षौद्रमिदं शुभ्रं कपिलायाः सुगन्धिकम्** ।

**सुस्वादु मधुरं देव मधुपर्कं गृहाण भो** ॥

मधुपर्कं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

पुनराचमनीयम्

**ॐ शुचिर्वाप्यशुचिर्वाऽपि यस्य स्मरणमात्रतः** ।

**शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम्** ॥

पुनराचमनीयं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

पञ्चामृतम्

तत्रादौ पयसा

**ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥**

**देवाद्यैर्वन्दिता धेनुः सर्वपापप्रणाशिनी ।**

**त्वं क्षीरस्नापितो देव नित्यं शोकहरो भव ॥**

पयः स्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

शुद्धोदकेन

**ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वꣳहि रिप्रम्प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतऽएमि । दीक्षातपसोस्तनूरसि तान्त्वा शिवाꣳसग्मांपरिदधे भद्रं वर्णं पुष्यन् ॥**

दध्ना

**ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य व्वाजिनः । सुरभि नो मुखाकरत्प्रणऽआयूꣳषि तारिषत् ॥**

**पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।**

**दध्यर्पितं मया देव स्नानाय प्रतिगृह्यताम् ॥**

दधिस्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

शुद्धोदकेन

**ॐ आपोऽअस्मान्...** ।

शुद्धोदकस्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

घृतेन

**ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षिहव्यम् ॥**

**रसानामुत्तमं त्वाज्यं देवानां च सदाप्रियम् ।**

**तेन त्वं स्नापितो देव मम कान्तिप्रदो भव ॥**

घृतस्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

शुद्धोदकेन

**ॐ आपोऽअस्मान्...** ।

शुद्धोदकस्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

मधुना

**ॐ मधु व्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

**मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः पिता ॥**

**मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥**

**यस्य धारणमात्रेण तृप्तिं यान्ति पितामहाः ।**

**मधुना स्नापितो देव नित्यं शोकहरो भव ॥**

मधुस्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

शुद्धोदकेन

**ॐ आपोऽअस्मान्...** ।

शुद्धोदकस्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

शर्करया

**ॐ अपाꣳरसमुद्वयसꣳसूर्ये सन्तꣳसमाहितम् । अपा ꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥**

**इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ।**

**मलापहारिणी दिव्या स्नानाय प्रतिगृह्यताम् ॥**

शर्करास्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

शुद्धोदकेन

**ॐ आपोऽअस्मान्...** ।

शुद्धोदकस्नानं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

वस्त्रम्

**ॐ तस्माद्यज्ञात्सर्व्वहुतः...** ।

**पीताम्बरयुगं देव सर्वकामार्थसिद्धये ।**

**मया निवेदितं भक्त्या गृहाण जगदीश्वर ॥**

वस्त्रयुग्मं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

यज्ञोपवीतम्

**ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः...** ।

**दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात्** ।

**ब्रह्मसूत्रं सोत्तरीयं गृहाण जगदीश्वर** ॥

यज्ञोपवीतं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ॥

आभूषणादीनि

**ॐ किरीटकुण्डलादीनि काञ्चीवलययुग्मकम्** ।

**कौस्तुभं वनमालां च भूषणानि भजस्व भो** ॥

आभूषणं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

चन्दनम्

**ॐ तं यज्ञं...** ।

**श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्** ।

**विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम्** ॥

श्रीखण्डचन्दनं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

तिलयवाक्षताः

**ॐ धान्यराजाः स्वमाङ्गल्या विष्णुप्रीतिकरा यवाः** ।

**तस्मादेषां प्रदानेन ममास्त्वविकलं फलम्** ॥

पुष्पम्

**ॐ श्रीश्चते लक्ष्मीश्चपत्क्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्** ।
**इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण** ॥

**इमानि पुष्पाणि मनोहराणि सुरासुराणामपि दुर्लभानि** ।

**कल्पद्रुमादिद्रुमजानि तानि पुष्पाञ्जलिर्मेऽस्तु सुखाय नित्यम्** ॥

नानाविधपुष्पाणि समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

सिन्दूरम्

ततो लक्ष्मीप्रीतये सिन्दूरादिसौभाग्यद्रव्याणि समर्पयेत्

**सिन्दूरं च वरं रम्यं भाले शोभाविवर्धनम् ।**

**पूरणं भूषणानाञ्च सिन्दूरं प्रतिगृह्यताम् ॥**

**दिव्यरत्नसमायुक्ता वह्निभानुसमप्रभाः ।**

**गात्राणि शोभयिष्यन्ति ह्यलङ्काराः सुरेश्वरि ॥**

सौभाग्यद्रव्याणि समर्पयामि श्रीरमायैः नमः ।

अङ्गपूजा

ॐ विष्णवे नमः पादौ पूजयामि । ॐ नारायणाय नमः जङ्घे पूजयामि । ॐ केशवाय नमः गुल्फौ पूजयामि । ॐ रामाय नमः जानुनी पूजयामि । ॐ कृष्णाय नमः मेढ्रं पूजयामि । ॐ नृसिंहाय नमः नाभिं पूजयामि । ॐ दामोदराय नमः हृदयं पूजयामि । ॐ जनार्दनाय नमः कण्ठं पूजयामि । ॐ श्रीधराय नमः बाहू पूजयामि । ॐ वाचस्पतये नमः मुखं पूजयामि । ॐ जगन्नाथाय नमः ललाटं पूजयामि । ॐ सर्वात्मने नमः शिरः पूजयामि । ॐ सत्यनारायणाय नमः सर्वाङ्गं पूजयामि ।

तुलसीपत्राणि

**तुलसीं रत्नरूपां च हेमरूपां च मञ्जरीम् ।**

**भवमोक्षप्रदां नित्यमर्पयामि हरिप्रियाम् ॥**

तुलसीपत्रं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

धूपः

**ॐ ब्राह्मणोऽस्य... ।**

**वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

धूपमाघ्रापयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

दीपः

**ॐ चन्द्रमा...** ।

**घृतवर्तिसमायुक्तं वह्निना योजितं मया** ।

**दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम्** ॥

दीपं दर्शयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

नैवेद्यम्

**ॐ नाभ्याऽआसीदन्तरिक्षम्...** ।

**नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु** ।

**ईप्सितं मे वरं देहि परत्र च परां गतिम्** ॥

नैवेद्यं समर्पयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

ऋतुफलम्

**रसयुक्तानि स्वादूनि यथाकालोद्भवानि च** ।

**मया नीतानि देवेश फलानि प्रतिगृह्यताम्** ॥

फलादिनैवेद्यं समर्पयामि रमासहिताय श्रीसत्यनारायणाय नमः ।

अपूपम्

**ॐ त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पितम्** ।

**गृहाण सुमुखो भूत्वा प्रसीद परमेश्वर** ॥

**रम्भाफलं घृतं क्षीरं गोधूमस्य च चूर्णकम्** ।

**जातीपत्रलवङ्गैलाशर्करागुडमिश्रितम्** ॥

**सपादं सर्वभक्ष्याणि चैकीकृत्य निवेदितम्** ।

**मया श्रद्धावता देव गृहाण जगदीश्वर** ॥

अपूपं समर्पयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

आचमनीयम्

**ॐ यत्पुरुषेण...** ।

**कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम्** ।

**आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः** ॥

आचमनीयं समर्पयामि श्रीरमासहिताय श्रीसत्यनाराणाय नमः ।

चन्दनादिकरोद्वर्तनम्

**ॐ श्रीखण्डं कुङ्कुमं चैव कर्पूरागरुमिश्रितम् ।**

**करोद्वर्तनकं देव गृहाण परमेश्वर ॥**

करोद्वर्तनकं समर्पयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

फलम्

**ॐ इदं फलं मया देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

नारिकेलादिफलं समर्पयामि श्रीरमासहिताय सत्यनारायणाय नमः ।

ताम्बूलम्

**ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।**

**एलाचूर्णादिसहितं ताम्बूलं प्रतिगृह्यताम् ॥**

ताम्बूलं समर्पयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

दक्षिणां समर्पयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

चामरम्

**ॐ शशाङ्ककरसंकाशं हिमडिंडिरपाण्डुरम् ।**

**प्रोत्सारयासु दुरितं चामरामरवल्लभ ॥**

चामरं दोलयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

व्यजनम्

**ॐ शिखिपुङ्खसमायुक्तं शैत्यमानन्ददायकम् ।**

**व्यजनं दोलयामित्वामतः शान्तिं प्रयच्छ मे ॥**

व्यजनं दोलयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

आदर्शम्

**ॐ दर्शनेन त्वमादर्श नूनं मङ्गलदायकः ।**

**शौर्यसौभाग्यसत्कीर्तिर्निर्मलज्ञानदो भव ॥**

आदर्शं दर्शयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

ततो यथाशक्ति जपं कुर्यात् ।

नीराजनम्

**ॐ पञ्चवर्तिसमायुक्तं घृतेन ज्वलितं मया ।**

**आरार्तिकप्रदानेन सन्तुष्टो भव सर्वदा ॥**

**चन्द्रादित्यौ च धरणीविद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि तेन नीराजयाम्यहम् ॥**

नीराजनं समर्पयामि श्रीरमासहिताय श्रीसत्यनारायणाय नमः ।

कर्पूरदीपः

**ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चोज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वचः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥**

**सूर्येन्दुतारकावह्निस्तेजःपुञ्जविराजितम् ।**

**कर्पूरदीपं देवेश गृहाण पुरुषोत्तम ॥**

पुष्पाञ्जलिः

**ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**

**तेह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥**

**ॐ नमो भगवते तुभ्यं सत्यनारायणाय ते ।**

**नमस्ते विश्वरूपाय शङ्खचक्रगदाभृते ॥**

**पद्मनाभाय देवाय हृषीकपतये नमः ।**

**नमस्तेऽनन्तरूपाय त्रिगुणात्मविभाविने ॥**

**लक्ष्मीकान्ताय देवाय जगदानन्दकारिणे ।**

**सहस्रशिरसे तुभ्यं वाग्विभूतिकृते नमः ॥**

प्रदक्षिणा

**ॐ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।**

**देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषं पशुम् ॥**

**यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तानि तानि प्रणश्यन्तु प्रदक्षिणपदे पदे ॥**

नमस्कारः

**सत्यनारायणं देवं वन्देऽहं कामदं विभुम् ।**

**लीलया विततं विश्वं येन तस्मै नमो नमः ॥**

**प्रणमामि सदा सत्यं सत्यनारायणं गुरुम् ।**

बद्धाञ्जलिः पठेत्

**अमोघं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।**

**हृषीकेशं जगन्नाथं वागीशं वरदायकम् ॥**

**योगेश्वरं गुणातीतं गोविन्दं गरुडध्वजम् ।**

**जनार्दनं व्रजानन्दं श्रीवल्लभमधीश्वरम् ॥**

**सत्यनारायणं देवं वन्देऽहं कामदं विभुम् ।**

**लीलया रचितं विश्वं येन तस्मै नमो नमः ॥**

**प्रणमामि सदा सत्यं सत्यनारायणं परम् ।**

**दुर्गमे विषमे घोरे शत्रुभिः परिपीडिते ॥**

**विविधापत्सु घोरेषु दुःखेष्वपि च यद्भयम् ।**

**विनाशाय सदादेव तत्सर्वमुपसर्गकम् ॥**

**त्वन्मायामोहिताः सर्वे ब्रह्माद्यास्त्रिदिवौकसः ।**

**न जानन्ति गुणं रूपं तवाश्चर्यमिदं प्रभो ॥**

**मूढोऽहं त्वां कथं जाने मोहितस्तव मायया ।**

**प्रसीद पूजितो भक्त्या यथाविभवविस्तरैः ॥**

**पुत्रं वित्तं च मच्चित्तं पाहि मां शरणागतम् ।**

**शरणं तं प्रपद्येऽहं सर्वकामार्थसिद्धये ॥**

**प्रणमामि सदा सत्यं देवं नारायणं गुरुम् ।**

विशेषार्घ्यं दद्यात्

**ॐ जातो दैत्यवधार्थाय देवानां पालनाय च ।**

**तस्मै देवाय सत्याय सगुणाय महात्मने ॥**

**व्यक्ताव्यक्तस्वरूपाय हृषीकपतये नमः ।**

**गृहाणार्घ्यं मया दत्तं रमया सहित प्रभो ॥**

क्षमापनम्

**ॐ त्राहि मां सर्वग श्रीश हरे संसारसागरात् ।**

**पुष्कराक्ष निमग्नोऽहं मायाविज्ञानमत्सरात् ॥**

**त्राहि मां देवदेवेश त्वत्तो नास्तीह रक्षिता ॥**

इत्यर्घ्यं निवेद्य शङ्खजलं निवेदयेत्

**ॐ यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।**

**निवेदितं च नैवेद्यं गृहाण चानुकम्पया ॥**

**मन्त्रहीनं क्रियाहीनं विधिहीनं सुरेश्वर ।**

**यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥**

**साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।**

**तत्सर्वं क्षम्यतां देव गृहाण परमेश्वर ॥**

इत्यर्घ्यं पराङ्मुखं कृत्वा **ॐ अर्घ्यपात्राय नमः** । **ॐ शङ्खपात्राय नमः** । इति पूजनम् ।

ततो ब्राह्मणद्वारा कथां शृणुयात् । कथाश्रवणानन्तरं पूर्णपात्रं कुर्यात् । (फलयज्ञोपवीतवस्त्रादिद्रव्यसमेतं तण्डुलपूर्णपात्रं हस्तेनादाय सङ्कल्पं कुर्यात् ।)

अद्येत्यादि देशकालौ समुच्चार्य... मम कृतैतत् दीपकलशगणेशपूजन पूर्वकं साङ्गसपरिवाररमासहितश्रीसत्यनारायणपूजनकर्मणः परिपूरणार्थमिदं पूर्णपात्रं प्रजापतिदैवतं गोत्राय... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**दक्षिणासङ्कल्पः**

हरिः ॐ तत्सदित्यादि देशकालौ संस्मृत्य मम श्रुतिस्मृतिपुराणोक्त फलावाप्तिपूर्वकं मनोवाञ्छासिद्धयर्थं सत्यनारायणव्रताङ्गत्वेन कृतस्य दीपकलशगणेशगणपत्यादि-वनस्पत्यन्तदेवतापूजनपूर्वकं साङ्गपरिवाररमासहितश्रीसत्यनारायणपूजनकर्मणः प्रतिष्ठा-साङ्गतासिद्धयर्थमिमां दक्षिणां रौप्यं चन्द्रदैवतं.... गोत्राय... नाम शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

विसर्जनम्

**ॐ यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।**

**इष्टकामप्रसिद्धयर्थं पुनरागमनाय च ॥**

**गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ।**

**यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वर ॥**

**आवाहनं न जानामि न जानामि विसर्जनम् ।**

**पूजां चैव न जानामि क्षम्यतां परमेश्वर ॥**

कर्मेश्वरार्पणम्

**ॐ कायेन वाचा मनसेन्द्रियैर्वा बुद्धयात्मना वानुसृतः स्वभावात् ।**

**करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत् ॥**

प्रार्थना

**ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**

**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥**

**चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**

**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥**

ॐ अच्युताय नमः ३ । कर्मेश्वरार्पणमस्तु ।

अभिषेकः

**ॐ द्यौः शान्ति...। तच्चक्षुर्देवहितम्...। ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवाः...।** इत्यादि मन्त्रैरभिषेकं कुर्यात्।

प्रसादवितरणम्

यजमान अपूपपुष्पादि हस्तेनादाय मन्त्रं पठेत्

**बलिर्विभीषणो भीष्मः प्रल्हादो नारदो ध्रुवः।**

**कपिलश्चान्तरिक्षश्च वसुर्वायुसुतस्तथा॥**

**विश्वक्सेनोद्धवाक्रूरसनकाद्या महर्षयः।**

**वासुदेवप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः॥**

इति मन्त्रोच्चारणपूर्वकं विष्णुभक्तेभ्यः प्रसादादिकं समर्पयेत्।

**यजमानाय प्रसादवितरणम्**

आशिषमन्त्रपठनपूर्वकं प्रसादवितरणं कुर्यात्

**ॐ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते।**

**धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥**

*॥ इति सत्यनारायणपूजाविधिः ॥*

## शब्दार्थाः

पूर्णिमा = पूर्णिमा नामको तिथि

संक्रान्तिः = सूर्य एक राशिबाट अर्को राशिमा सर्ने (पर्व दिन)

प्रदोषः = सूर्यास्तपछिको ३ घडी वा ७२ मिनेटको समय

यथोपलब्धवस्तु = समय परिस्थिति अनुसार प्राप्त हुने पदार्थ

सरलोपायेन = सजिलो उपायले

सत्यपुरवासकामनया = सत्यपुर नामको भगवान्को निवासस्थान (बैकुण्ठवासको कामनाले)

## अभ्यासार्थाः प्रश्नाः

१. **सत्यनारायणस्य कथा कदा कदा कर्तुं शक्यते ?**

२. **सत्यनारायणस्य व्रतं कथं क्रियते ?**

३. **सत्यनारायणव्रतस्य के के अधिकारिणः ?**

४. **सत्यनारायणस्य प्रसादग्रहणस्य महत्त्वं प्रकाशयत ।**

५. **सत्यनारायणस्य अर्पणीयानि विशेषवस्तूनि लिखत ।**

६. **सत्यनारायणव्रतस्य महत्त्वं प्रकाशयत ।**

७. **सत्यनारायणस्य व्रतविधिं लिखत ।**

८. **सत्यनारायणस्य सङ्कल्पवाक्यं रचयत ।**

९. **सत्यनारायणस्य ध्यानमन्त्रं लिखत ।**

१०. **सत्यनारायणस्य अर्घ्यदानमन्त्रं लिखत ।**

११. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

प्रदोषः, भगवान्, नियमान्, शङ्खजलम्, तुलसीदलम्, अपूपम्, चामरम्, प्रसादग्रहणम्, सत्यनारायणः, पीताम्बरम्

१२. **परस्परं मेलयत**

| | |
|---|---|
| पीठपूजादेवता | इन्द्रः |
| तुलसीपत्राणि | सत्यनारायणः |
| द्वारपालदेवता | विष्णुप्रीतिकराः |
| प्रधानदेवता | हरिप्रिया |
| दिक्पालदेवता | नन्दः |
| यवाः | विमला |
| | वरुणः |

१३. **पाठाधारेण रिक्तस्थानं पूरयत**

(क) ॐ ध्यायेत्सत्यं गुणातीतं .............. ।

.................... कौस्तुभाभरणं हरिम् ॥

(ख) ॐ .................... सर्वकामार्थसिद्धये ।

मया निवेदितं भक्त्या .................... ॥

(ग) ॐ धान्यराजाः स्वमाङ्गल्या ............ ।

तस्मादेषां प्रदानेन .................... ॥

(घ) ॐ तुलसीं रत्नरूपां च ............... ।

.................... अर्पयामि हरिप्रियाम् ॥

(ङ) ॐ .................... नृसिंहं दैत्यसूदनम् ।

हृषीकेशं जगन्नाथं .................... ॥

## प्रयोगाभ्यासः

(क) विशेषार्घ्यमन्त्रान् बद्धाञ्जलिमन्त्रान् ध्यानमन्त्रान् च शिक्षक-सहयोगेन कण्ठस्थं कृत्वा परस्परं श्रावयत ।

(ख) तुलसीदलसमर्पणमन्त्रं तिलयवाक्षतासमर्पणमन्त्रं च कण्ठस्थं शिक्षकं श्रावयत ।

(ग) अङ्गपूजायाः अभ्यासार्थं शिक्षकसहयोगेन कस्यायामपि प्रतिमायां सत्यनारायणस्य अङ्गकल्पनां कृत्वा पूजयेत् ।

द्वाविंशः पाठः

# गृहप्रवेशविधिः

**महत्त्वम्**

शुभमुहूर्ते शिलान्यासादिकं कृत्वा नवनिर्मितगृहस्य प्रवेशकर्म गृहप्रवेशकर्म इति कथ्यते। गृहप्रवेशोऽपि शुभमुहूर्त एव क्रियते। ज्यौतिषशास्त्रेण शुभमुहूर्तं विचार्य पुत्रपत्नीसहितो गृहपतिः दीपकलशगणेशपूजनपूर्वकं ब्राह्मणान् वृत्वा स्वस्तिपुण्याहवाचनं वाचयित्वा ब्राह्मणान् कन्याः गां च पुरस्कृत्य कुलदेवतासहितानामन्येषां देवानां च प्रतिमां गृहीत्वा सदुग्धजलपूर्णं कलशं हस्ताभ्यां समादाय धारां कुर्वन् गृहं प्रदक्षिणीकृत्य गृहप्रवेशकर्म कुर्यात्।

**गृहप्रवेशे शुभमुहूर्तविचारः**

**(क) कलशचक्रशुद्धिविचारः**

सूर्यस्थितनक्षत्राद् गृहप्रवेशदिनस्य नक्षत्रपर्यन्तं गणनीयम्। यथा २०७८ माघमासे गृहप्रवेशमुहूर्तो विचार्यते

२०७८।०९।३० दिनाङ्के उत्तरषाढानक्षत्रस्य द्वितीयचरणे सूर्यः अस्ति। अतः उत्तरषाढानक्षत्रे सूर्य अवस्थितोऽस्ति इति ज्ञायते। तेन कलशस्वरूपशुभनक्षत्रादिबोधचक्रस्य माध्यमेन उत्तरषाढानक्षत्राद् ०७८ माघमासस्य प्रथमदिनाङ्के हस्तानक्षत्रं पतति। तेन गणनासङ्ख्या = २० तथा फलं विनाशोऽस्ति। अतः तद्दिने गृहप्रवेशः अशुभं भवति।

उत्तरषाढानक्षत्राद् ०७८ माघमासस्य २ दिनाङ्के चित्रानक्षत्रं पतति। तेन गणनासङ्ख्या = २१ तथा फलं विनाशोऽस्ति। अतः तद्दिने अपि गृहप्रवेशः अशुभं भवति।

उत्तरषाढानक्षत्राद् ०७८ माघमासस्य ३ दिनाङ्के स्वातीनक्षत्रं पतति। तेन गणनासङ्ख्या = २२ तथा फलं स्थैर्यमस्ति। अतः तद्दिने गृहप्रवेशः शुभं भवति।

उत्तरषाढानक्षत्राद् ०७८ माघमासस्य ४ दिनाङ्के विशाखानक्षत्रं पतति। तेन गणनासङ्ख्या = २३ तथा फलं स्थैर्यमस्ति। अतः तद्दिने गृहप्रवेशः शुभं भवति।

उत्तरषाढानक्षत्राद् ०७८ माघमासस्य ५ दिनाङ्के अनुराधानक्षत्रं पतति। तेन गणनासङ्ख्या = २४ तथा फलं स्थैर्यमस्ति। अतः तद्दिने गृहप्रवेशः शुभं भवति।

२०७८ माघमासस्य प्रथमतः पञ्चमपर्यन्तेषु दिनाङ्केषु मध्ये प्रथमद्वितीयदिनयोः कलशचक्रशुद्धिर्नास्ति । तृतीयचतुर्थपञ्चमदिनेषु कलशचक्रशुद्धिदृश्यते । अतः येषु त्रिदिवसेषु नक्षत्रतिथ्यादीनां शुद्धिं प्राप्ते सति गृहप्रवेशाय शुभदिवसो मन्यते ।

२०७८ माघमासस्य तृतीयदिवसे भौमवासरस्तथा रिक्तातिथिदोषश्च भवति । अतः तद्दिने गृहप्रवेशः अशुभं भवति ।

२०७८ माघमासस्य चतुर्थदिवसे बुधवासरस्तथा विशाखानक्षत्रं पतति । अतः नक्षत्रदोषात् तद्दिने अपि गृहप्रवेशः अशुभं मन्यते ।

२०७८ माघमासस्य पञ्चमदिवसे गुरुवासरे वासरनक्षत्रतिथ्यादिशुभं भवति । अतः तद्दिने कलशचक्रश्च शुद्धिं भवति । अतः लग्नादिकं विचार्य स्थानशुद्धिं च कृत्वा गृहप्रवेशकर्तुं शक्यते ।

**कलशचक्रस्वरूपविचारः**

**पञ्चाङ्गस्थकलशचक्रस्वरूपम्**

| नं. | फलानि | शुभाशुभः |
|---|---|---|
| १ | अग्निदाहः | अशुभः |
| ५ | जनवासशून्यम् | अशुभः |
| ९ | द्रव्यलाभः | शुभः |
| १३ | श्रीप्राप्तिः | शुभः |
| १७ | कलहः | अशुभः |

| | | |
|---|---|---|
| २१ | विनाशः | अशुभः |
| २४ | स्थैर्यम् | शुभः |
| २७ | स्थिरत्वम् | शुभः |

**शुभनक्षत्रादिबोधकचक्रम्**

| | |
|---|---|
| **नक्षत्राणि** | रोहिणीमृगशिराचित्राऽनुराधारेवत्युत्तराफाल्गुन्युत्तराषाढोत्तरभाद्रपदा |
| **वासराः** | सोमबुधगुरुशुक्रवासराः मतान्तरे शनिवासरश्च |
| **तिथयः** | २ । ३ । ५ । ६ । ७ । १० । ११ । १२ । १३ |
| **लग्नाः** | २ । ५ । ८ । ११ उत्तमाः । ३ । ६ । ९ । १२ मध्यमाः |
| **लग्नशुद्धिः** | (क) लग्नात् १ । २ । ३ । ५ । ७ । ९ । १० । ११ एषु स्थानेषु स्थिताः |
| **शुभग्रहाः** | (ख) ३ । ६ । ११ स्थानेषु स्थिताः पापग्रहाः शुभाः<br>(ग) ४ । ८ स्थानशुद्धी |
| **मासाः** | माघफाल्गुनवैशाखज्येष्ठमासा उत्तमाः ।<br>मार्गशीर्षाषाढौ मध्यमौ । |
| **अयनम्** | उत्तरायणम् । |

**अथ गृहप्रवेशविधिः**

सपत्नीकः कर्ता नवनिर्मितगृहं सुसज्जीकृत्य तत्प्राङ्गणे कर्मपात्रं निर्माय पूजासामग्रीं सम्पाद्य गृहप्रवेशप्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा

ॐ अद्येत्यादि देशकालौ सङ्कीर्त्य अमुक गोत्र... अहं मम अद्य कर्तव्य गृहप्रवेशकर्मणि दीपकलशगणेशपूजनपूर्वकमेतद्‌गृहावासस्य स्थैर्यसिद्धये आयुरारोग्यपुत्रपौत्रधनधान्यादिसमृद्धये शिवप्राप्तिकामनया नवनिर्मितगृहप्रवेशं करिष्ये । इति सङ्कल्प्य ब्राह्मणवरणं च कुर्यात् ।

ततोऽर्घ्यं संस्थाप्य दीपं कलशं गणेशं यथाविधि सम्पूज्य ततो पुण्याहवाचनं सर्षपविकिरणं पञ्चगव्यसेचनं प्राशनं च विधाय ब्राह्मणं कन्यां गां पुरतः कृत्वा स्वेष्टदेवताप्रतिमाः दीपं कलशं गणेशं च समादाय नवं फलपल्लवादियुतं सदुग्धजलपूर्णं कलशं हस्ताभ्यां समादाय धारां कुर्वन्नेकवारं गृहं प्रदक्षिणीकृत्य स्वस्तिवाचनसहितमङ्गलगीतवादित्रतुर्यघोषादिकं कुर्वन् गृहं प्रविश्य प्रधानगृहमध्ये धान्योपरि जलपूर्णं कलशं स्थापयेत् ।

ततो गृहस्य स्थैर्यार्थं पुण्याहं शान्त्यध्यायं च वाचयित्वा ब्राह्मणादिभ्यः सम्पूज्य भोजयित्वा दक्षिणां दत्वाऽऽशिषो गृह्णीयात् । तत्पश्चादग्निस्थापनविधिनाऽऽग्निं संस्थाप्य हवनवास्तुपूजनादिकं सम्पाद्य बन्धुवान्धवादियुतो भुञ्जीत ।

ततो गृहे यथासुखं पञ्चरात्रपर्यन्तं शयनाशनादिनिरवच्छेदेन कर्तव्यम् ।

*॥ इति गृहप्रवेशविधिः ॥*

## शब्दार्थाः

| | |
|---|---|
| सुलग्ने | = शुभ लग्नमा |
| शुभमुहूर्ते | = शुभमुहूर्तमा, राम्रो समयमा |
| प्राङ्गणे | = प्राङ्गणमा, आँगनमा |
| स्थैर्यम् | = लामो समयसम्म रहने गरी, स्थिरता |
| पुरतः | = अगाडि |
| इष्टदेवता | = मनोकामना पूरा गर्ने देवता, आफूले मान्ने गरेका देवता |
| कुलदेवता | = वंश एवं कुलले मान्दै आएका देवी वा देवता, कुलपरम्परामा मानिआएका देवता |
| प्रदक्षिणीकृत्य | = प्रदक्षिणा गरेर, परिक्रमा गरेर |
| शयनाशने | = सुत्ने र खाने काम |
| निरवच्छेदेन | = निरन्तर, सिलसिला नटुटाईकन, अविच्छिन्न रूपले |

## अभ्यासार्थाः प्रश्नाः

१. **शुभमुहूर्ते गृहप्रवेशे को लाभः ?**

२. **गृहप्रवेशस्य सङ्कल्पवाक्यं रचयत ।**

३. **गृहप्रवेशविधिं सङ्क्षेपेण लिखत ।**

४. **गृहप्रवेशकाले आवश्यकानि वस्तूनि कानि ?**

५. **कलशचक्रस्वरूपं सचित्रं वर्णयत ।**

६. **२०७८ माघमासस्य २७ दिनाङ्के गृहप्रवेशकर्तुं शक्यते न वा ? विविच्यताम् ।**

७. **पञ्चाङ्गस्थकलशचक्रस्वरूपं लिखत ।**

**८. गृहप्रवेशे शुभनक्षत्रादिबोधकचक्रनिर्माणं कुरुत ।**

**९. युक्तियुक्तपदं विचार्य रिक्तस्थानं पूरयत**

माघमासः, गुरुवासरः, चित्रा, प्राङ्गणे, जनवासशून्यम्

(क) गृहप्रवेशे ................ शुभमासोऽस्ति ।

(ख) ................ नक्षत्रे गृहप्रवेशकर्तुं शक्यते ।

(ग) वासरेषु ................शुभवासरोऽस्ति ।

(घ) गृहप्रवेशात् पूर्वं ................ दीपादिपूजा क्रियते ।

(ङ) अशुभमुहूर्ते गृहप्रवेशे ................ फलं भवति ।

**१०. परस्परं मेलयत**

| | |
|---|---|
| गृहप्रवेशकाले आवश्यकी | लक्ष्मीप्राप्तिः |
| नूतनगृहप्रवेशे | स्थायित्वम् |
| श्रीप्राप्तिः | धनलाभः |
| स्थिरत्वम् | पञ्चरात्रं स्थेयम् |
| द्रव्यलाभः | गोः |
| | वृषः |

## प्रयोगाभ्यासः

१. मित्रैः सह मिलित्वा कलशचक्रस्य चित्रं निर्माय कक्षायां प्रदर्शयत ।

२. सखिभिः सह गृहप्रवेशविषये विचारविमर्शं कुरुत ।

त्रयोविंशः पाठः

# लक्षवर्तिकादीपदानविधिः

## महत्त्वम्

सपादलक्षवर्तिकादीपदानविधिः शास्त्रेषु वर्तते । कार्तिकमाघवैशाखमासेषु अन्यशुभदिने वा लक्षवर्तिकादीपदानं क्रियते । दीपस्य महत्त्वमन्धकारनिवारणपूर्वकं ज्योतिप्रकाशनरूपमस्ति । लक्षवर्तिकानां विधिसम्मतरीत्या प्रज्ज्वालनेन सङ्कल्पितकामना-पूर्तिस्तथाऽन्त र्निहितस्याज्ञानरूपान्धकारस्य निवारणञ्च भवति । यथा बहिरन्धकारस्य निवारणं दीपादिभिः क्रियते तथैवाभ्यन्तरीयान्धकारस्य निवारणम् आत्मदीपप्रकाशनेन भवतीति ज्ञानाय लक्षवर्तिकादिभिर्दीपदानविधिः शास्त्रेषु प्रतीकरूपेण स्थापितो वर्तते । अतः लक्षवर्तिकादीपदानकर्मणा सदभीष्टसिद्धिर्भवतीति शास्त्रेषु वर्णितमस्ति । प्रथमतो रजस्वलावस्थायां ज्ञाताज्ञातरूपेण स्पर्शजन्यदोषशमनाय स्त्रीभिः लक्षदीपदानं कर्तव्यं भवति । एवं वैधव्यदोषपरिहारार्थं च नारीभिरेव कर्तव्यम् । सर्वैरपि सङ्कल्पितकामनासिद्धये परमेश्वरप्रीतये सकामेन निष्कामेन च लक्षवर्तिकाप्रज्ज्वालनकर्म कर्तुं शक्यते ।

## पूजाविधिः

ज्योतिर्विदादिष्टे शुभमुहूर्तयुतदिने सायङ्काले दीपकलशगणेशादिदेवान् सम्पूज्य ब्रह्माविष्णुशिवसहितं साङ्गं प्रधानदेवं च सम्पूज्य सङ्कल्पं कृत्वा सपादलक्षवर्तिकाभिः प्रधानदेवस्य आरार्तिक्यं कृत्वा कथाश्रवणनामसङ्कीर्तनादिभिः तां रात्रिं निनयेत् । प्रातः अग्निस्थापनविधिनाग्निं संस्थाप्य त्रयोदशब्राह्मणान् वृत्वा तैः ब्राह्मणैः **ॐ अग्नेनय सुपथा०** इति पूर्णमन्त्रद्वारा वर्तिकायाः दशांशं १२,५०० सङ्ख्याकं तर्पणं तेनैवमन्त्रेण १२५० सङ्ख्याकं हवनं कारयित्वा हवनदशांशं १२५ मार्जनं च सम्पाद्य कृतस्य सपादलक्षवर्तिदीपदानकर्मणः साङ्गतासिद्धये सपादलक्षसङ्ख्यापरिमिततिल-यव-तण्डुलघृतवस्त्रादीनि तथा त्रिंशत्पलपरिमितनिर्मिते कांस्यपात्रे घृतं पूरयित्वा स्वर्णवर्तिसहितरजतदीपञ्च तत्र सहैव संस्थाप्य आचार्याय ससङ्कल्पं दद्यात् । ततस्त्रयोदशब्राह्मणान् पायसादिभिर्भोजयेत् । गोदानशय्यादानद्विजदम्पतीपूजनञ्च कुर्यात् ।

**अथ प्रयोगः**

पूजासामग्रीं सम्पाद्य कर्ताचमनादिकं कृत्वा प्रतिज्ञासङ्कल्पं कुर्यात् । तद्यथा पूर्वसङ्कल्पसिद्धिरस्तु अमुकगोत्रा अमुकनाम्नी देवी अहं मम समस्तजन्म-बाल्ययौवनबार्द्धक्यावस्थोपार्जितं कायिकवाचिकमानसिकसांसर्गिक सकलपापक्षयपूर्वकम् ऐहिकानेकविधपापनिरसनपूर्वकमनेकविधनिरवधिकभोगानुभवानन्तरं श्रीवैकुण्ठादिविष्णुलोकप्राप्त्यर्थं श्रीपरमेश्वरप्रीतये च तिलतैलाक्तान् घृताक्तान् (सूर्यपुष्प-तैलाक्तान् सर्षपतैलाक्तान् वा) सपादलक्षसङ्ख्याकान् प्रज्वालितान् दीपान् लक्ष्मीनारायणप्रीतये (पृथग् देवाराधनपक्षे ब्रह्मणे विष्णवे ईश्वराय देव्यै गङ्गायै तुलस्यै सूर्याय गणपतये वा इति योजनीयम्) समर्पयामि न मम । इति सङ्कल्प्य आचार्यादिब्राह्मणवरणं स्वस्तिवाचनं पुण्याहवाचनं दीपकलशगणेशादिदेवपूजनं मातृकापूजनं नान्दीश्राद्धं च कृत्वा मण्डपस्थदेवान् सम्पूज्य साङ्गं प्रधानदेवतापूजनं कुर्यात् ।

**पूजासामग्री**

कलश-४, थाली-४, प्रतिमा-४, घिउले भरेको दान गर्ने तीस पलको कासको कचौरा-१, दान गर्ने कपडा, तर्पणमार्जन गर्ने समग्री (दुध-तिल-जल-कुश आदि) र भाँडाहरू, सवा लाख परिमित दान गर्ने तिल, जौ, चामल, घिउ, कपडा आदि । ब्राह्मण सङ्ख्या-१५ जना, सवा लाख बत्ती, सुनको बत्ति, चाँदीको दियो, सौभाग्य सामग्री-४, पूजा सामग्री-२ भाग, नरिवल, फलफूल, माला आदि ।

**अथ लक्षवर्तिदीपदानपूजाविधिः**

सपत्नीसहितो कर्ता ब्रह्माविष्णुशिवानां गङ्गायाश्च प्राणान् प्रतिष्ठाप्य षोडशोपचारेण व्यस्तं समस्तं वा सम्पूज्य प्रधानदेवं पूजयेत् । तद्यथा

**"प्रधानदेवतापूजा"** इत्यनेन यस्य देवस्य प्रमुखोद्देश्येन लक्षवर्तिदीपदानकरणाय सङ्कल्पः वर्तते स एव प्रधानदेवः । अत्र लक्ष्मीनारायणौ प्रधानदेवौ अधिकृत्य पूजाविधिर्लिख्यते ।

तत्र लक्ष्मीनारायणयोः प्रतिमाम् अग्न्युत्तारणपूर्वकं कलशोपरि स्थापयित्वा प्राणान् प्रतिष्ठाप्य पूजनं कुर्यात् । तद्यथा

आवाहनम्

**ॐ सहस्रशीर्षा०** ॐ भूर्भुवः स्वः । भो लक्ष्मीनारायणौ इहागच्छतम् इह तिष्ठतं मम पूजां गृह्णीतम् । यावत्पूजां करोमि तावत् युवां सुस्थितः सुस्थिरौ सुप्रसन्नौ सुवरदौ भवताम् । लक्ष्मीसहितनारायणमावाहयामि स्थापयामि पूजयामि च ।

**ॐ गोलोकधामाधिपते रमापते गोविन्द दामोदर दीनवत्सल ।**

**राधापते माधव सात्वतां पते सिंहासनेऽस्मिन्मम सम्मुखे भव ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । आवाहयामि ।

अथ ध्यानम्

**ॐ अरुणकमलसंस्था तद्रजः पुञ्जवर्णा**

**करकमलधृतेष्टाभीतियुग्माम्बुजा च ।**

**मणिमुकुटविचित्राऽऽलङ्कृतिः पद्ममाला**

**भवतु भुवनमाता सन्ततं श्रीः श्रियै नः ॥**

**ॐ सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम् ।**

**सहारवक्षस्थलकौस्तुभश्रियं नमामि विष्णुं शिरसा चतुर्भुजम् ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । ध्यायामि ।

आसनम्

**ॐ अनेकरत्नसंयुक्तं नानामणिसमन्वितम् ।**

**कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम् ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । आसनं समर्पयामि ।

पाद्यम्

**ॐ औदुम्बरे सुन्दरभाजनेऽमले रेखाङ्किते पद्मदलानुकारिणि ।**

**संस्थापितं पादसुखावहं शुभं मयार्पितं पाद्यमिदं गृहाण ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । पाद्यं समर्पयामि ।

अर्घ्यम्

**ॐ सुगन्धिपुष्पैः प्रकरैः सुवासितैर्वियन्नदीशीतलवारिभिः शुभैः ।**

**त्रिलोकनाथार्तिहरार्घ्यमादराद् गृहाण लक्ष्मीप्रियदेवदेव ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । अर्घ्यं समर्पयामि ।

आचमनीयम्

**ॐ सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् ।**

**आचम्यतां मया दत्तं गृहीत्वा परमेश्वर ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । आचमनीयं जलं समर्पयामि ।

मधुपर्कम्

**ॐ यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यम् ।**

**तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोसानि ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । मधुपर्कं समर्पयामि ।

स्नानम्

**ॐ मन्दाकिन्याः समानीतैर्हेमाम्भोरुहवासितैः ।**

**स्नानं कुरुष्व देवेशि सलिलैश्च सुगन्धिभिः ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । स्नानं समर्पयामि ।

पञ्चामृतस्नानम्

**ॐ पञ्चामृतं मयानीतं पयो दधि घृतं मधु ।**

**शर्करा च मया दत्तं गृहाण परमेश्वर ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । पञ्चामृतस्नानं समर्पयामि । पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि । ततो आचमनीयं जलं समर्पयामि ।

गन्धोदकस्नानम्

**ॐ त्वां गन्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः ।**

**त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः। गन्धोदकस्नानं समर्पयामि। गन्धोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि। ततो आचमनीयं जलं समर्पयामि।

उद्वर्तनस्नानम्

**ॐ अꣳशुना तेऽअꣳशुः पृच्यतां परुषा परुः।**

**गन्धस्ते सोममवतु मदाय रसोऽअच्युतः॥**

ॐ लक्ष्मीनारायणाभ्यां नमः। उद्वर्तनस्नानं समर्पयामि। उद्वर्तनस्नानान्ते शुद्धोदकस्नानं समर्पयामि। ततो आचमनीयं जलं समर्पयामि।

सुगन्धितद्रव्यस्नानम्

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।**

**उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमाऽमृतात्॥**

ॐ लक्ष्मीनारायणाभ्यां नमः। सुगन्धितद्रव्यस्नानं समर्पयामि।

महाभिषेकस्नानम्

**ॐ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।**

**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा॥**

**ॐ श्रीश्चते लक्ष्मीश्चपत्क्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।**

**इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण॥**

ॐ लक्ष्मीनारायणाभ्यां नमः। महाभिषेकस्नानं समर्पयामि।

शुद्धोदकस्नानम्

**ॐ शुद्धं गङ्गोदकमिदं सर्ववन्दितमीप्सितम्।**

**पापेध्मवह्निरूपं च गृह्यतां कमलालये॥**

ॐ लक्ष्मीनारायणाभ्यां नमः। शुद्धोदकस्नानं समर्पयामि।

अङ्गप्रोक्षणम्

**ॐ सूक्ष्मतन्तुभवं वस्त्रं निर्मितं विश्वकर्मणा।**

**लोकलज्जाहरं देवि गृहाण सुरसत्तमे॥**

ॐ लक्ष्मीनारायणाभ्यां नमः। अङ्गप्रोक्षणं समर्पयामि।

वस्त्रम्

**ॐ देहसौन्दर्यबीजं च सदा शोभाविवर्द्धनम् ।**

**कार्पासजं च कृमिजं वसनं देवि गृह्यताम् ॥**

**ॐ विभा सर्वतः प्रस्फुरत्प्रोज्ज्वलं च**

**स्फुरद्रश्मिसूक्ष्मं परं दुर्लभं च ।**

**स्मृतो निर्मितं पद्मकिञ्जल्कवर्णं**

**गृहाणाम्बरं देव पीताम्बराख्यम् ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । वस्त्रं समर्पयामि । वस्त्रान्ते आचमनीयं जलं समर्पयामि ।

यज्ञोपवीतम्

**ॐ स्वर्णतन्तुसमायुक्तं पवित्रं दत्तमुत्तमम् ।**

**विष्णुप्रिये गृहाणेदमुपवीतं सुशोभनम् ॥**

**ॐ तस्मादश्वाऽअजायन्त ये के चोभयादतः ।**

**गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । यज्ञोपवीतं समर्पयामि । यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि ।

गन्धः

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

**ॐ करोद्वर्त्तनकं देव सुगन्धैः परिवासितैः ।**

**गृहीत्वा मे वरं देहि परत्र च परां गतिम् ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । गन्धं समर्पयामि ।

तिलाक्षताः

**ॐ महाव्रीहिसमुत्पन्नान् हरिद्रागन्धमिश्रितान् ।**

**गृहाण देवदेवेशि सुप्रीतो भव सर्वदा ॥**

**ॐ अक्षताश्चन्दनैर्युक्तान् हरिद्रागन्धमिश्रितान् ।**

**मया समर्पितान् तुभ्यं स्वीकुरुष्व जगत्पते ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । तिलाक्षतान् समर्पयामि ।

पुष्पमालाम्

**ॐ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।**

**मयानीतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । पुष्पमालां समर्पयामि ।

तुलसीदलम्

**ॐ तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।**

**भवमोक्षप्रदां तुभ्यमर्पणमि हरिप्रियाम् ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । तुलसीदलं समर्पयामि ।

**लक्ष्म्याः अङ्गपूजनम्**

ॐ चञ्चलायै नमः पादौ पूजयामि । ॐ चपलायै नमः गुल्फौ पूजयामि । ॐ कान्त्यै नमः जानुनी पूजयामि । ॐ मङ्गलायै नमः जङ्घे पूजयामि । ॐ भद्रकाल्यै नमः उरू पूजयामि । ॐ कमलिन्यै नमः कटिं पूजयामि । ॐ शिवायै नमः नाभिं पूजयामि । ॐ क्षमायै नमः उदरं पूजयामि । ॐ गौर्यै नमः हृदयं पूजयामि । ॐ सिंहवाहिन्यै नमः स्तनद्वयं पूजयामि । ॐ स्कन्दमात्रे नमः मुखं पूजयामि । ॐ कम्बुकण्ठ्यै नमः कण्ठं पूजयामि । ॐ सरस्वत्यै नमः मुखं पूजयामि । ॐ सुवासिन्यै नमः नासिकां पूजयामि । ॐ स्वर्णकुण्डलायै नमः कर्णद्वयं पूजयामि । ॐ चण्डायै नमः नेत्रद्वयं पूजयामि । ॐ शिवायै नमः ललाटं पूजयामि । ॐ कुमार्यै नमः शिरः पूजयामि । ॐ सर्वरूपिण्यै नमः सर्वाङ्गं पूजयामि ।

**नारायणस्य अङ्गपूजनम्**

ॐ सत्यपरब्रह्मणे नमः पादौ पूजयामि । ॐ सङ्कर्षणाय नमः गुल्फौ पूजयामि । ॐ कालात्मने नमः जानुनी पूजयामि । ॐ विश्वरूपाय नमः जङ्घे पूजयामि । ॐ विश्वस्मै नमः कटिं पूजयामि । ॐ विष्णुरूपधृषे नमः मेढ्रं पूजयामि । ॐ पद्मनाभाय नमः नाभिं

पूजयामि । ॐ परमात्मने नमः हृदयं पूजयामि । ॐ वैकुण्ठाय नमः कण्ठं पूजयामि । ॐ सर्वास्त्रधारिणे नमः बाहू पूजयामि । ॐ वाचस्पतये नमः मुखं पूजयामि । ॐ हरये नमः जिह्वां पूजयामि । ॐ दामोदराय नमः दन्तान् पूजयामि । ॐ सहस्राक्षाय नमः नेत्रे पूजयामि । ॐ सर्वात्मने नमः शिरः पूजयामि । ॐ श्रीलक्ष्मीसहितनारायणाय नमः सर्वाङ्गं पूजयामि ।

**अथ वाहनपूजनम्**

तत्रादौ

उलूकपूजनम्

**ॐ व्वर्षाहूर्र्ऋतूनामाखुः कशोमान्थालस्ते पितॄणाम्बलायाजगरो व्वसूनाङ्कपिञ्जलः कपोतऽउलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ॥**

ॐ उलूकाय नमः उलूकं पूजयामि ।

गरुडपूजनम्

**ॐ अग्नऽइन्द्रवरुणमित्रदेवाः शर्द्धः प्प्रयन्तमारुतोतविष्णो । उभानासत्त्या रुद्रोऽअधग्नाः पूषाभगः सरस्वतीजुषन्त ॥**

ॐ गरुडाय नमः गरुडं पूजयामि ।

धूपः

**ॐ ब्राह्मणोऽस्यमुखमासीद्बाहू राजन्यः कृतः ।**

**ऊरू तदस्य यद्वैश्यः पद्भ्याꣳशूद्रोऽअजायत ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । धूपमाघ्रापयामि ।

दीपः

**ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत ।**

**श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । दीपं दर्शयामि । हस्तप्रक्षालनम् ।

नैवेद्यम्

**ॐ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णो द्यौः समवर्तत ।**

**पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन् ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । नैवेद्यं निवेदयामि ।

ऋतुफलम्

**ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।**

**बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वꣳहसः ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । ऋतुफलं समर्पयामि ।

ताम्बूलम्

**ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।**

**वसन्तोऽस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । मुखवासार्थं ताम्बूलं समर्पयामि ।

दक्षिणा

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । दक्षिणां समर्पयामि ।

आरार्तिक्यम्

**ॐ इदꣳहविः प्रजननं मेऽअस्तु दशवीरꣳसर्वगणꣳस्वस्तये । आत्क्मसनिप्प्रजासनि पशुसनिलोकसन्न्यभयसनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतोऽअस्म्मासुधत्त ॥१॥**

**ॐ आ रात्रि पार्थिवꣳरजः पितुरप्रायिधामभिः । दिवः सदाꣳसि बृहती वितिष्ठसऽआत्त्वे षं वर्त्तते तमः ॥२॥**

**ॐ कर्पूरनिर्मितं दीपं स्वर्णपात्रे निवेशितम् ।**

**नीराजनं मया दत्तं गृहाण परमेश्वरि ॥**

**ॐ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ।**

**सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । आरार्तिक्यं समर्पयामि ।

मन्त्रपुष्पाञ्जलिः

**ॐ यज्ञेन यज्ञमयजन्तदेवास्तानि धर्म्माणि प्प्रथमान्न्यासन् ।**

**ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे साद्ध्याः सन्ति देवाः ॥**

**ॐ राजाधिराजाय प्रसह्यसाहिने**

**नमो वयं वैश्रवणाय कुर्महे ।**

**स मे कामान् कामकामाय मह्यं**

**कामेश्वरो वैश्रवणो ददातु ॥**

**कुवेराय वैश्रवणाय महाराजाय नमः ।**

**ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् । सार्वभौमः सार्वायुष आन्तादापरार्धात् । पृथिव्यै समुद्रऽपर्यन्ताया एकराडिति । तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ।**

**ॐ व्विश्श्वतश्च्चक्षुरुत व्विश्श्वतो मुखो व्विश्श्वतो बाहुरुत व्विश्श्वतस्प्पात् । सम्बाहुब्भ्यान्धमति सम्पतत्त्रैद्द्यावा भूमी जनयन्देवऽएकः ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । मन्त्रपुष्पाञ्जलिं समर्पयामि ।

प्रदक्षिणा

**यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि तानि प्रणश्यन्ति प्रदक्षिण पदे पदे ॥**

ॐ लक्ष्मीनारायणाभ्यां नमः । प्रदक्षिणां समर्पयामि ।

नमस्कारः

**ॐ नमस्ते सर्वलोकेशि नमो भक्तजनप्रिये ।**

**नमस्तेऽस्तु महालक्ष्मि त्राहि मां शरणागतम् ॥**

**ॐ अनेकजन्मजनितं पापराशिविनाशनम् ।**

**नमामि विष्णुविश्वेशं लक्ष्म्या सह सुरोत्तमम् ॥**

क्षमाप्रार्थना

**ॐ विष्णोर्वक्षसि पद्मे त्वं शङ्खे चक्रे तथाम्बरे ।**

**लक्ष्मीदेवि यथासि त्वं मयि नित्यं तथा भव ॥**

**ॐ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।**

**दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥**

**ॐ आवाहनं नजानामि नजानामि तवार्चनम् ।**

**पूजां चैव नजानामि क्षमस्व परमेश्वर ॥**

**ॐ यदक्षरं पदं भ्रष्टं मात्राहीनं च यद्भवेत् ।**

**तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥**

**ॐ अनेन यथाशक्तिकृतेन पूजनेन लक्ष्मीनारायणौ प्रीयेतां न मम । ॐ तत्सद् ब्रह्मार्पणमस्तु ।**

विशेषफलम्

**ॐ संसारसागरे मग्नं दीनं मां करुणानिधे ।**

**कर्ममोहगृहीताङ्गं मामुद्धर भवार्णवात् ॥**

**ॐ मनोरथो मदीयोऽयं सफलः सर्वथा त्वया ।**

**निर्विघ्नेनैव कर्तव्यो दासोऽहं तव केशव ! ॥**

एवं पूजां सम्पाद्य सायङ्काले तण्डुलोपरि स्वर्णनिर्मितवर्तिसहितरजतमयं दीपं संस्थाप्य सम्पूज्य च तेन दीपेन सपादलक्षवर्तिकाः प्रज्वालयेत् । शङ्खघण्टादिवाद्यवादनादिभिश्च भगवन्नामसङ्कीर्तनादीभिः आरार्तिक्यादिभिश्च मण्डपं गृहं देवालयं वा त्रिःपरिक्रम्य दीपान् शुभस्थाने संस्थापयेत् । जलेन शीतलीकृत्य आरार्तिक्यं देवेभ्यः समर्प्य स्वयं गृहीत्वा मन्त्रपुष्पाञ्जलिना देवं स्तुत्वा रात्रिं जागरणादिना निनयेत् । प्रातः नित्यपूजासहितमण्डपस्थान्

देवान् च सम्पूज्य अग्निस्थापनविधिना पूर्वाङ्गपर्यन्तं कर्म कृत्वा त्रयोदशविप्रैः **"ॐ अग्नेनय सुपथा०"** इति पूर्णमन्त्रेण विधिनिर्दिष्टमाध्यमेन तर्पणं हवनं मार्जनं दानं च कृत्वा त्रयोदशब्राह्मणान् सम्भोज्य शय्यादानद्विजदम्पतीपूजनं प्रधानदेवताया उत्तराङ्गपूजनं च सम्पाद्यार्घ्यदानादिकं कृत्वा कर्म समापयेत् । ततो ब्राह्मणद्वारा टीकाप्रसादाशीर्वादग्रहणञ्च कृत्वा इष्टैः सह भुञ्जीत ।

*॥ इति लक्षवर्तिकादीपदानपूजाविधिः ॥*

**शब्दार्थाः**

| | |
|---|---|
| अङ्गदेवताः | = प्रधान देवताका उपकारक देवता, मुख्य देवता विष्णु भइकन पनि लक्षवर्तिदीपदान विधिमा ब्रह्मा, विष्णु र शिव नै अङ्गदेवता हुन्छन् । कामनानुसार मुख्य देवता शिव, विष्णु, पशुपति, गणेश, बगलामुखी आदि भए पनि अङ्गदेवताहरू ब्रह्माविष्णुशिव नै मानिन्छन् |
| प्रधानदेवता | = मुख्यकर्म जुन देवताको उद्देश्य गरेर गरिएको हो तिनै प्रधानदेवता मानिन्छन् । मुख्यलाई अङ्गी र ब्रह्मा विष्णु शिवलाई अङ्गदेवता पनि भनिन्छ |
| अन्तर्निहितस्य | = भित्र रहेको |
| आत्मदीपप्रकाशनम् | = आफूभित्रको आत्माको ज्ञानरूपी दियोले प्रकाश गर्ने काम, आत्मज्ञानगर्नु |
| प्रतीकरूपम् | = उदाहरणका रूपमा, दृष्टान्तमा |
| ज्ञाताज्ञातरूपेण | = जानी नजानीकन भएका, गरेका |
| स्पर्शजन्यदोषशमनाय | = छुवाछुतले भएका दोषहरू हटाउन |
| वैधव्यादिदोषपरिहारार्थम् | = विधवा हुनबाट बच्नका लागि, विधवा हुने दोष मेटाउनका लागि |

| | |
|---|---|
| निष्कामेन | = कामनारहित |
| सकामेन | = धनसम्पत्ति पुत्रपौत्रादि प्राप्तिका कामनाले |
| वर्त्यादशांशतर्पणम् | = बत्तीको दशांश तर्पण र तर्पणको दशांश हवन भन्ने आशय |
| सूर्यपुष्पतैलाक्तान् | = सूर्यमुखी फूलको तेलले भिजाएका |
| अधिकृत्य | = स्वीकार गरेर, मानेर |
| इष्टैः सह | = आफ्ना इष्टमित्रहरूका साथ |

## अभ्यासार्थाः प्रश्नाः

१. **दीपस्य महत्त्वं किमस्ति ?**

२. **स्त्रियो लक्षदीपदानं किमर्थं कुर्वन्ति ?**

३. **अत्र तर्पणहवनमार्जनार्थं कस्य मन्त्रस्योपयोगः क्रियते ?**

४. **अङ्गदेवताः काः काः भवन्ति ?**

५. **लक्षवर्तिदीपदानकर्मणः कर्ता कः ?**

६. **प्रधानदेवताङ्गदेवताप्रकाशनाय चित्रं चित्रयत ।**

७. **सपादलक्षवर्त्या तर्पणमार्जनब्राह्मणभोजनसङ्ख्याः प्रदर्शयत ।**

८. **प्रतिज्ञासङ्कल्पवाक्यस्वरूपं रचयत ।**

९. **प्रधानदेवस्याङ्गपूजनप्रकारं प्रदर्शयत ।**

१०. **शब्दान् प्रयुज्य वाक्यरचनां कुरुत**

सपादलक्षवर्तिकाः, तर्पणम्, स्त्रियः, अङ्गदेवताः, जागरणम्

११. **परस्परं मेलयत**

| | |
|---|---|
| (क) सपादलक्षवर्तिकाः | १२,५०० |
| (ख) तर्पणम् | १२५ |
| (ग) हवनम् | १३ |
| (घ) मार्जनम् | १,२५० |
| (ङ) ब्राह्मणभोजनम् | १,२५,००० |
| | २२५ |

## प्रयोगाभ्यासः

१. लक्षवर्तिकादीपदानविषये परस्परं विचारयत ।

२. तर्पणहवनमार्जनादिविषयेषु तव मित्राणि जानन्ति न वा ? विचारविमर्शं कुरुत ।

३. एकमन्त्रेणैव तर्पणादिकं भवति । तं मन्त्रं कण्ठस्थमस्ति किं मित्रान् ? इति विचारयत ।

४. युष्माकं गृहे यदा लक्षवर्तिका दीपदानकार्यक्रमस्य आयोजना भवति, तदा शिक्षकं मित्रानपि नयतु । तत्र प्रत्यक्षावलोकनं कृत्वा परस्परं चर्चां कुरुत ।

५. समीपस्थदेवालये यदि लक्षवर्तिकाकार्यक्रमः प्रचलति । तत्र गुरुणा सह गत्वा ज्ञानं गृह्णन्तु ।

६. **ॐ अग्ने नय सुपथा रायेऽअस्मान् विश्वानि देवव्वयुनानिव्विद्वान् ।**

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिं व्विधेम ॥**

मन्त्रोऽयं सम्यक्तया कण्ठस्थं कुरुत ।

७. लक्षवर्तिकाक्रमे मुख्यदेवताः काः काः भवितुं शक्नुवन्ति ? परस्परं चिन्तयत ।